अच्युतग्रन्थमालाया नवमं पुष्पम् ।

श्रीभगवदादिशेषविरचितं

# परमार्थसारम् ।

विवरणसमेतम्



प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः,

काशी ।

अच्युतग्रन्थमालाया नवमं पुष्पम् ।



श्रीभगवदादिशेषप्रणीतं

# परमार्थसारम्

श्रीराघवानन्दविरचितेन

विवरणेन समेतम् ।

काशीस्थराजकीयप्रधानसंस्कृतपाठशालाप्राच्यनव्योभयन्यायशास्त्राध्यापकेन

न्यायव्याकरणाचार्य पं० श्रीसूर्यनारायणशुक्लेन

विरचितया टिप्पण्या परिष्कृतं तेनैव संशोधितं च ।

१९८९ वैक्रमाब्दे

प्रथमं संस्करणम् १००० ]                [ मूल्यम् ।=)

श्रीविश्वेश्वरः शरणम् ।

# किञ्चिद्वक्तव्यम् ।

सहर्षमिदमावेद्यते यदस्यामच्युतग्रन्थमालायां नवमपुष्पत्वेन श्रीसूर्यनारायणशर्मविरचितया टिप्पण्या श्रीराघवानन्दविरचितेन विवरणेन च सनाथं श्रीभगवदादिशेषप्रणीतं परमार्थसारं प्रकाशमासादयतीति ।

अस्य परमार्थसारस्य रचयिता भगवान् आदिशेषश्च शेषनाग एव इति एतद्ग्रन्थस्थितात्—

'वेदान्तशास्त्रमखिलं विलोक्य शेषस्तु जगदाधारः ।

आर्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम्'॥ इत्यन्तिमात् पद्यात्,

'जगदाधारः जगतामाधारभूतः शेषः अनन्तो नान्यः कोऽपि विपश्चित्' इति विवरणात्,

यौद्धार्थनिरूपणप्रस्तावे लघुमञ्जूषायां

"तदुक्तं परमार्थसारे शेषनागेन—मृगतृष्णायामुदकम्" इत्यादि व्याहरतो नागेशभट्टवचनाच्चावगम्यते ।

अत एव वैयाकरणनागेशभट्टस्यास्मिन् महती आस्थेति तेन बहूनि पद्यानि लघुमञ्जूषायामेव व्याख्यातानि परमार्थसारविवरणं च रचितं श्रीराघवानन्दरचितविवरणवत् । परन्तु तच्च परमार्थसारं नानिर्वचनीयख्यातिपरतया व्याचष्टेऽपि तु सदसत्ख्यातिपरतया । परन्तु अस्माकं दौर्भाग्येन तद्विवरणं नाद्यावधि अस्माकं दृग्गोचरमिति नितरां खिद्यतीव मे चेतः ।

एवं स्थिते व्याकरणमहाभाष्यप्रणेता योगसूत्ररचयिता चरकप्रतिसंस्कर्ता च यः पतञ्जलिः स एवैतस्य परमार्थसारस्य रचयितेति सिद्धम् । युज्यते चैतत्—

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।

योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि' ॥

इत्यभियुक्तवचनात् कायिकवाचिकमानसिकत्रिविधमलक्षपणग्रन्थत्रयनिर्माणानन्तरं ब्रह्मविद्याप्रकाशकग्रन्थनिर्माणमपि पतञ्जले-

रावश्यकर्तव्यतामावहति, अन्यथा चित्तशुद्धेरुपायं प्रतिपाद्याऽपि चित्तशुद्धिफलाप्रतिपादनेन महर्षेन्यूनतापत्तिः स्यात् ।

विवरणकर्ता श्रीराघवानन्दयतिश्च श्रीकृष्णानन्दशिष्य इति अस्यैव विवरणस्य प्रारम्भिकश्लोकैरवगम्यते परन्त्वयं कदा भुवमलञ्चकारेति नाद्यावधि निर्णीतम् ।

विवरणसमेतं परमार्थसारपुस्तकं पूर्वमनन्तशयने मुद्रितमपि इदानीं दुष्प्रापमिति पूर्वप्रकाशितेन विवरणेन नवीनया टिप्पण्या च समेतं पुनरात्मानं प्रकाशयति ।

विवरणकर्ता सदसद्भिलक्षणाऽनिर्वचनीयाऽनादिर्भावरूपा ब्रह्मज्ञाननिवर्त्या चाविद्येति प्रतिपादयति ।

टिप्पणीकारस्तु—सदसत्ख्यातिरूपा जन्याऽनात्मन्यात्माभिमानरूपा ब्रह्मज्ञाननिवर्त्या अविद्या इति प्रतिपादयति ।

विवरणकारः अनिर्वचनीयस्य रजतादेरुत्पत्तिं प्रतिपादयति, टिप्पणीकारस्तु असत एव रजतादेर्भानम् ।

विवरणकारः अनादिर्जीव इति, उपाधिवैशिष्ट्येन जन्य इति च टिप्पणीकारः ।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरं ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

इति हरिग्रन्थस्य, हेलाराजरचिततद्व्याख्यानस्य, नागेशभट्टरचितलघुमञ्जूषायाश्च दर्शनेन टिप्पणीकारमतमेव वैयाकरणानां सम्मतं श्रुतिस्मृतिपुराणसंमतं पातञ्जलमहाभाष्यसंमतं चेति टिप्पणीदर्शनादवगतं भविष्यतीति नात्र प्रयत्यते ।

वस्तुतस्तु टिप्पणीकर्तुरिह न किंचनापूर्वं मतं किन्तु मञ्जूषायां यथा नागेशभट्टैः प्रतिपादितम् तदेव क्वचिदक्षरमप्यपरिवर्त्य क्वचिच्च परिवर्त्य लिखितमिति सहृदया विदाङ्कुर्वन्तु—

विदुषां विधेयस्य
**सूर्यनारायणशर्मशुक्लस्य**

## विषयाः ।





॥ श्रीः ॥

श्रीभगवदादिशेषप्रणीतम्

# परमार्थसारम्

श्रीराघवानन्दविरचितेन

विवरणेन समेतम् ।

अग्नीषोमात्मनानाबुधधरमखिलव्याप्तमास्याङ्घ्रिदोष्णां
साहस्रैर्युक्तमन्तःकृतसुरनिवहं स्वप्रभोद्भासिताशम् ।
नेत्रैरर्केन्दुरूपैर्विलसितमनलोग्राननं चित्रवर्णं
भूषाकोटिप्रदीप्तावयवमवतु वो विश्वरूपं मुरारेः ॥ १ ॥

विघ्नपांसुमवधूय वायुवद्भक्तहृद्गगनदीप्तिदायिनम् ।
विष्फुरत्कलभवक्त्रविग्रहं विश्वनाथमनिशं भजामहे ॥ २ ॥

अमलकमलमध्ये सन्निविष्टाङ्गयष्टिः
करजलरुहराजत्पुस्तकाक्षालिमाला ।
अखिलनिगमसारः सर्वभूतान्तरस्था
भवतु भवभयानां भेदनी भारती नः ॥ ३ ॥

श्रीमच्छाङ्करमार्गमध्यवसतिः शाखाशतालङ्कृतः
संसारार्कगभस्तितप्ततनुभिः संसेविताङ्घ्रिर्जनैः ।
कृष्णानन्दमहीरुहोऽमृतरसापूर्णैरपूर्वैः फलै-
श्चित्रां प्रीतिमुपासकेषु जनयन् जीयान् महीमण्डले ॥ ४ ॥

अशेषोपनिषत्सिद्धवस्तुतत्त्वानुगामिनी
राघवानन्दमुनिना शेषार्येह विमृश्यते ॥ ५ ॥

परमार्थसारसंज्ञं ग्रन्थं चिकीर्षुराचार्यस्तस्याविघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च विशिष्टेष्टदेवताप्रणामलक्षणं मङ्गलं मूलतः सम्पादयन्नर्थत आरम्भापेक्षितं विषयप्रयोजनसम्बन्धाधिकारिलक्षणमनुबन्धचतुष्टयमाविष्करोति—

परं परस्याः प्रकृतेरनादि-
मेकं निविष्टं बहुधा गुहासु ।
सर्वालयं सर्वचराचरस्थं
त्वामेव विष्णुं शरणं प्रपद्ये ॥ १ ॥

त्वां नित्यापरोक्षमात्मानमेव विष्णुं सदानन्दचिद्घनं परमात्मानं शरणं प्रपद्ये निजधामत्वेन विमृशामि । विष्णोरस्मदितरात्मत्वेऽनीश्वरत्वान्नाश्रयणीयत्वमित्यत उच्यते—परस्याः प्रधानायाः जगन्मूलकारणम्-

श्रीचन्द्रधरपादाब्जद्वयमाराध्य भक्तितः ।
नागेशदर्शितदिशा व्याख्यास्ये शेषकारिकाः ॥ १ ॥

तत्रभवान् परमर्षिः पतञ्जलिः कायवाङ्मनसामशुद्धीः चरकमहाभाष्ययोगसूत्रैरपाकृत्य शुद्धान्तःकरणानां मोक्षेच्छावतां शिष्याणां 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या ब्रह्मज्ञानमेव मोक्षकारणमिति संप्रतिपन्नानां ब्रह्मज्ञानजनकमुपनिषदर्थतात्पर्यं निर्गन्तुमुपनिषदर्थतात्पर्यनिर्णायकं परमार्थसारसंज्ञं ग्रन्थमारभमाणः विष्णुरूपां परदेवतामानमति परम् इत्यादिना

परस्याः—जगत्कारणभूतायाः प्रकृतेरपि परं—कारणम् । एकम् अद्वितीयम् सर्वालयं—सर्वस्याधिष्ठानम् । सर्वचराचरस्थं—सर्वान्तर्यामिणम् ।

तायाः प्रकृतेर्मायाशक्तेः परं प्रधानं तस्या अपि स्वतोऽसत्या अस्फुरद्रूपायाश्च सत्तास्फूर्तिप्रदत्वेन प्रेरकं न खलु शक्तिमतोऽन्यत्र शक्तिः सती स्फूर्तिमती वा स्याद्, अन्यथा स्वातन्त्र्येण शक्तिमत्त्वमेव हीयेतेति नामान्तराद् भगवदुक्तिः प्रसज्येत । सदानन्दचिदेकरसत्वेऽपि स्वमायाशक्तिमाश्रित्य महदाद्यवन्यन्ततत्त्वग्रामतत्कार्यसमष्टिव्यष्टिदेहतद्धर्मविशेषसर्वस्वात्मना सदाप्रकाशमानमित्यर्थः ।

यथाहुः—

"सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ।
सदा त्रिभुवनाहारतृप्ताय भवते नमः" ॥ इति ।

तदेवं सर्वेश्वरत्वेन विष्णोराश्रयणीयत्वं साधितम् प्रकृतेः परत्वे हेतुः अनादिमिति । नित्यसिद्धमित्यर्थः ।

नन्वनादित्वं प्रकृतेरप्यस्ति सादित्वे मूलप्रकृतित्वासिद्धेः । "अ-

---

मूलप्रकृतित्वासिद्धेरिति । वस्तुतस्तु मायाया जन्यत्वमेव 'सौम्य यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति दृष्टान्तेन 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातम्भवती'ति प्रतिज्ञया च ब्रह्मातिरिक्तस्य सर्वस्य जन्यत्वावेदनात् अन्यथा प्रकृतिपदव्यपदेश्याया मायाया अजन्यत्वे ब्रह्मणस्तदकारणत्वात् ब्रह्मविज्ञानेन मायाविज्ञानासंभावात् सर्वविज्ञानप्रतिज्ञाया उपरोधः स्यात् । अत एव 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इति श्रुत्या सावयवत्वप्रतिपादनमुखेन सूचितं जन्यत्वमुपपद्यते सावयवस्य घटस्य जन्यत्वदर्शनात् । अत एव च "प्रजापतिपतिं विष्णुमनन्तमपराजितम् । प्रधानपुंसोरजयोः कारणं कार्यभूतयोः" इति विष्णुपुराणे कार्यभूतयोरिति प्रधानपुंसोर्विशेषणं संगच्छते ।

जमेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां सरूपा" ( श्वेता—४—५ ) इति श्रुतेश्च । अतः कथं तत्परत्वमित्यत उक्तम्—एकमिति । स्वतन्त्रमित्यर्थः । प्रकृतेरनादित्वेऽप्यचेतनत्वान्न स्वातन्त्र्यं भगवतस्तु चेतनत्वात् स्वातन्त्र्यमिति सिद्धोऽतिशयः । श्रुतिश्च "अव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" (का--३--११) इति ।

यद्वा अनादित्वे हेतुः एकमिति । अद्वितीयमित्यर्थः. । स्वव्यतिरिक्तस्य कस्यापि वस्तुनोऽभावादस्य स्वतःसिद्धसत्तास्फूर्तिमत्त्वमास्थेयम् ।

---

न च 'अजामेकां लोहतशुक्लकृष्णाभि'ति श्रुतौ अजामिति, प्रधानपुंसोरित्यत्र अजयोरिति विशेषणेन च प्रकृतेरनादित्वमास्थेयमिति वाच्यम् ।

अजयोरिति अजामिति च विशेषणस्य प्रकृतेः पुरुषस्य च स्वातन्त्र्यनिरासाय रूपकेण सत्त्वेनाद्दोषात् अन्यथा कार्यभूतयोरजयोरिति विशेषणयोर्विरोधस्य दुष्परिहरत्वं स्यात् ।

यद्वा एतत्सृष्टौ तज्जन्मानुपलम्भादजत्वम् । तदुक्तं चरके पतञ्जलिना 'आदिर्नास्त्यात्मनः क्षेत्रपारम्पर्यमनादिकम्' इति ।क्षेत्रपदेन च प्रकृतिर्गृह्यते 'प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च' इति गीतावचनात् ।

अत एव ब्रह्माण्डपुराणे—

स्थूलं विलाप्य करणे करणं निदाने
तत्कारणं करणकारणवर्जिते च ।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र
तं त्वां हरिं विमलबोधघनं नमामः ॥

इत्यनेन करणं महद् निदानं प्रकृतिः तत्कारणं प्रकृतिरूपं कारणं करणकारणवर्जिते ब्रह्मणि इत्यर्थकेन प्रकृतेर्ब्रह्मणि लयो दर्शितः । 'यस्य हि यत उत्पत्तिस्तस्य तत्रैव लयो न्याय्यो मृदीव शरावस्य' इति शाङ्करभाष्येण कारणे एव लयस्यौचित्येन ब्रह्मणः प्रकृतिकारणत्वावगम उपपद्यते ।

ततश्चानादित्वं सिध्यतीत्याशयः । श्रुतिश्च "अथ नित्यो देव एको नारायण" ( नारा० २ ) इति ।

ननु जीवानां बहुत्वात्तत्स्वरूपस्यास्यैकत्वं न घटत इत्यत उक्तं **बहुधा गुहासु निविष्टमिति** । गुहावद्दुर्विज्ञेयस्वरूपा सदसदादिप्रकारेणानिर्वाच्या माया गुहा तस्याः सत्त्वाद्यवयवभेदेन बहुवचनम् , निमित्ते सप्तमी, गुहासु स्वमायाशक्तिनिमित्तमेकमपि बहुधा निविष्टम् अनन्तजीवात्मना भासमानमित्यर्थः । श्रुतिश्च "इन्द्रो मायाभिः पुरुरूप ईयते" ( क० २–५–१९ ) इति । एवं चेदुपाधीनां मायानां पृथक्सत्त्वान्नैकत्वमित्यत उक्तं **सर्वालयमिति** सर्वस्यालयं सत्तास्फूर्तिप्रदमुपादानमित्यर्थः । मायातत्कार्यप्रपञ्चावस्थितिहेतुत्वात् परस्य न ततोऽन्यत्वं कस्यापि संभवतीत्यर्थः । सर्वालयत्वे हेतुः **सर्वचराचरस्थमिति** । सर्वेषु चरेष्वचरेषु च देहेषु स्थितम् अध्यक्षत्वेनानुप्रविष्टमित्यर्थः । **त्वामेव विष्णुमिति** जीवब्रह्मैकत्वं वेदान्तानां विषयोऽस्य विषयो दर्शितम् । तच्चाज्ञातं विषयः ज्ञातं सत्प्रयोजनं भवत्यखण्डानन्दानुभवात्मकत्वादिति विषयनिर्देशात् प्रयोजनमपि निर्दिष्टम् । ततस्तदनुभवकामोऽत्राधिकारीति च सूचितम् । एवमर्थाद्विषयनिर्देशादेवास्यानेन ग्रन्थेन प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धश्च प्रकटीकृत इति ज्ञेयम् ॥ १ ॥

नन्वात्मैव चेद्विष्णुः कुतः सर्वेऽहं ब्रह्मास्मीति न पश्यन्ति कुतो

---

गुहा—सदसद्रूपा माया तस्याः सत्त्वाद्यवयवभेदेन बहुवचनम् । मायाया सावयवत्वे मानम् । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' इति श्रुतिरेव । अनया श्रुत्या मायायाः सावयवत्वप्रतिपादनेन जन्यत्वमाविष्कृतं निवेदयिष्यते चैतदुपरिष्टात् ॥ १ ॥

वा 'मनुष्योऽस्मी'त्यन्यथात्मानं पश्यन्तीति चेत् तद्विचाराभावादित्याह—

आत्माम्बुराशौ निखिलोऽपि लोको
मग्नोऽपि नाचामति नेक्षते च ।
आश्चर्यमेतन्मृगतृष्णिकाभे
भवाम्बुराशौ रमते मृषैव ॥ २ ॥

निखिलोऽपि लोको जीववर्गः आत्मम्बुराशौ परमात्मामृताब्धौ मग्नोऽपि नियमेन तत्स्वरूपोऽपि तद् नाचामति न किञ्चिदनुभवति नेक्षते न जिज्ञासते च प्रत्युत मृगतृष्णिकाभे (तद्) मिथ्याभूतेऽनात्मनि च भवाम्बुराशौ संसारहेतुभूते देहादौ मृषैव भ्रान्त्यैव रमते आत्मबुद्धिं करोति चेति यद् एतदाश्चर्यम्। अघटितत्वेऽपि भासमानत्वान् मायामात्रमित्यर्थः । अनेन विष्णोर्निजरूपतिरोधनेन रूपान्तरप्रकाशेन या शक्तिः सा मायात्र प्रकृतिरित्युपदिष्टं भवति । पूर्वश्लोकेन पुरुषस्वरूपं चोपदिष्टम् । तेन प्रकृतिपुरुषतत्त्वजिज्ञासेहारभ्यत इति चिकीर्षितं च प्रतिज्ञातं भवति २॥

कथं पुनरात्मजिज्ञासोदियात्, केन कस्य सकाशात् कथं वात्मा जिज्ञास्य इत्यपेक्षायां तदुत्तरत्वेन ग्रन्थमवतारयति—

गर्भगृहवाससम्भवजन्म-
जरामरणविप्रयोगाब्धौ ।

---

आत्मनः स्वप्रकाशत्वेन नित्यापरोक्षत्वेऽपि मायावशात्तिरोहितस्वरूपः स्वं न पश्यति इति देहाद्यात्मबुद्धिं यत्करोति तन्मृषैव न सत्यमित्यर्थः ॥ २ ॥

ननु सांसारिकसुखमेव पुरुषार्थत्वेन प्रतिपन्नस्य जीवस्य ततो विरक्तिर्न स्यादिति

जगदालोक्य निमग्नं प्राह
गुरुं प्राञ्जलिः शिष्यः ॥ ३ ॥

जगद् आत्मानमन्यं च जीवलोकं गर्भगृहवाससम्भवजन्मजरामरणविप्रयोगाब्धौ गर्भ एव गृहं गर्भगृहं तत्र वासस्य सम्भवः प्राप्तिः, विप्रयोगः कलत्रपुत्रवित्तादीष्टवियोगः गर्भगृहवाससम्भवश्च जन्म च जरा च मरणं च विप्रयोगश्च गर्भगृहवासम्भवजन्मजरामरणविप्रयोगाः, त एवाब्धिर्दुःखसमुद्रः तस्मिन् निमग्नमालोक्य तस्मादुत्तितीर्षुः कश्चित् पुमान् शिष्यः तत्त्वजिज्ञासुःगुरुं "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ( मुण्ड १-२-१२ ) इति श्रुतेः उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" ( गीता ४-३४ ) इति स्मृतेश्च । तत्त्वज्ञं पुरुषप्रवरमुपेत्य प्राञ्जलिः बद्धाञ्जलिः प्राह । अयमर्थः- प्राचीनानेकजन्मविहितयज्ञदानतपोलक्षणसत्कर्मकदम्बकपरिशोधितान्तःकरणः साङ्गाधीतसकलवेदवेदान्तः श्रुतव्याकरणश्च सहस्रेषु कश्चित् पुमान् वेदान्तवाक्यार्थापातज्ञानयोगाद् आत्मैव नित्यं वस्तु ततोऽन्यत् सर्वमनित्यम् अतः सुखवत् प्रतीयमानोऽयं पुत्रवित्तकलत्रादिसंसारो वस्तुतो दुःखमेवेति निश्चित्य ततो विरागं गत्वा सांसारिके सुखफलमात्मतत्त्वज्ञानमेव काङ्क्षमाणस्तच्छेषत्वेन श्रुतशमदमादिसाधनसम्पन्नो भूत्वात्मतत्त्वसाक्षाद्बोधवन्तं जीवन्मुक्तं गुरुवरं यथाविध्युपगम्य बद्धाञ्जलिः पप्रच्छेति ॥ ३ ॥

---

मोक्षशास्त्रोपदेशोऽनर्थकोऽधिकारिणोऽलाभादिति सांसारिकं सुखं गर्भवासादिजन्यदुःखमिश्रितत्वात् दुःखमेवेति विरक्तिरुपपद्यत इत्याह—गर्भेति ॥ ३ ॥

किंलक्षणेन गुरुणा भाव्यमित्यपेक्षां प्रतिक्षिपन् प्रश्नप्रकारमाह-'त्वमि'ति चतुर्भिः श्लोकैः—

त्वं साङ्गवेदवेत्ता भेत्ता
संशयगणस्य ऋतवक्ता ।
संसारार्णवतरणप्रश्नं
पृच्छाम्यहं भगवन् ॥ ४ ॥

"उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

हे भगवन् ! त्वं साङ्गवेदवेत्ता अङ्गानि शिक्षाव्याकरणनिरुक्तच्छन्दोज्योतिषामयनकल्पाः, वेदा ऋग्यजुःसामाथर्वाख्याः, अङ्गैः षड्भिः सहिताः साङ्गाः, तेषां वेत्ता अध्येता। संशयगणस्य वेदार्थविषयस्य भेत्ता तदर्थनिश्चयज्ञानवान् । तत्रापि विशेषमाह—ऋतवक्ता ऋतस्य अशेषवेदान्तार्थभूतस्य भगवद्ब्रह्मादिशब्दलक्ष्यस्यात्मतत्त्वस्य वक्तोपदेष्टा स्वयं ज्ञातेत्येव न परम्; अन्येषां तत्प्रकाशकश्च । अतस्त्वामहं संसारार्णवतरणप्रश्नं संसार एव योऽर्णवो दुस्तरत्वादिसाम्यात् तस्य तरणे निमित्ते तत्तरणार्थं प्रश्नं प्रष्टव्यमर्थं पृच्छामि ॥ ४ ॥

---

'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्रुत्युक्तरीतिमाश्रित्य स्वस्मिन् कृपां जनयितुं गुरुं प्रशंसति—त्वमिति । ऋतवक्ता ऋतस्य सत्यस्य ब्रह्मणो वक्तेत्यर्थः ॥ ४ ॥

प्रष्टव्यमस्ति चेत् पृच्छेत्यत्राह—

दीर्घेऽस्मिन् संसारे
संसरतः कस्य केन सम्बन्धः ।
कर्म शुभाशुभफलद-
मनुभवति (नु) गतागतैरिह कः ॥ ५ ॥

कर्मगुणजालबद्धो
जीवः संसरति कोशकार इव ।
मोहान्धकारगहनात्
तस्य कथं बन्धनान्मोक्षः ॥ ६ ॥

गुणपुरुषविभागज्ञे
धर्माधर्मौ न बन्धकौ भवतः ।
इति गदितपूर्ववाक्यैः
प्रकृतिं पुरुषं च मे ब्रूहि ॥ ७ ॥

---

दीर्घ–अनादावेिति–प्रवाहन्यायेनानादित्वमित्यर्थः । जीव इति । एतन्मते जीवो जन्यः सा च जन्यता उपाधिवैशिष्ट्येन । अत एवाग्रे–एकस्मात्क्षेत्रज्ञाद् बहवः क्षेत्रज्ञजातयो जाताः । लोहस्थादिव दहनात् समन्ततो विस्फुलिङ्गकणा इति वक्ष्यति । क्षेत्रोत्पत्तिरेव तदुत्पत्तिरिति तद्व्याख्यातारः । जीवस्य नित्यत्वं तु विशेष्यांशमादाय । एवं घटादयोऽपि उपाधिवैशिष्ट्येन जन्याः, विशेष्यांशमादाय च नित्याः तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात् । अत एवाग्रे 'यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु । तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा ॥' इति वक्ष्यति । भाति विशेष्यतयेत्यर्थः । अत एव द्रव्यं नित्यमिति महाभाष्यं संगच्छते ।

इति गदितपूर्ववाक्यैः उक्तप्रश्नवाक्यैः पृष्टप्रष्टव्यार्थैः सह । तान्येवाह-दीर्घे अनादौ । संसारस्य सादित्वे मुक्तानां पुनर्बन्धप्रसङ्गादनादित्वमेव द्रष्टव्यमित्याशयः । अस्मिन् गर्भाधिवासादिदुःखरूपे संसारे संसरतः कस्य केन हेतुना संसारेण सम्बन्धः । स्वाभाविकत्वे संसारस्याग्न्यौष्ण्यादिवदनिवृत्तेः सहेतुकत्वमास्थेयम् स चेत् सत्यो हेतुर्हेतुमतः संसारस्यापि तर्हि सत्यतेत्यनिर्मोक्षः असत्यश्चेत् खपुष्पादिवत् कार्यकारणत्वं न घटेतेत्याशयः । सोऽयं क्षेत्रविषयः प्रश्नः ।

इह लोकत्रये शुभाशुभफलदं कर्म गतागतैः इतो लोकान्तरं तत इमं लोकमित्येवं गमनागमनैः कोऽनुभवति । पुरुषस्तावन्न संसरति तस्य व्याप्तत्वेन निरञ्जनत्वेन च लोकाल्लोकान्तरप्राप्तेः कर्मतत्फलसम्बन्धस्य चासम्भवात्, नापि प्रकृतिः, तस्या अचेतनत्वेन सुतरां तदसंभवादित्यर्थः । प्रकृतिव्यामोहितः पुरुषो जीवाख्यः संसरतीत्यत्राह कर्मगुणजालबद्धो जीवः संसरति कोशकार इव । कः इत्यनुषज्यते यत्तच्छब्दावध्याहार्यौ । कोशकारः उर्णनाभिः । तत्र गुणास्तन्तव इह सत्त्वादयः । जालम् आनाय इह सङ्घः । कर्म तन्तुप्रसरणादि इह शुभाशुभात्मकम् । कोशकार इव कर्मगुणजालबद्धः कर्माणि च गुणाश्च तेषां जालानि कर्मगुणजालानि तैर्बद्धो देहसम्बन्धं प्रापितः । यः संसरति गर्भवासादिदुःखमनुभवति स जीवः कः किं परः पुरुष एव किं वा तदन्यः कश्चित् । आद्ये मायोत्तीर्णत्वान्न तद्व्यामोहितः स्याद् द्वितीये 'द्यावाभूमी जनयन् देव एकः' (श्वे ३--३) इत्याद्या श्रुतिर्बाध्येतेत्यर्थः । सोऽयं क्षेत्रज्ञविषयः प्रश्नः ।

परस्यैव स्वमायया कथञ्चिज्जीवभावमभ्युपेत्याह मोहान्धकार-

गहनात् मोहोऽविद्या स एवान्धकारस्तमः तेन हेतुना गहनात् दुरुच्छेदाद् बन्धनात् कर्मगुणबन्धात् कथं केनोपायेन केन वा प्रकारेण तस्य मोक्षः । प्रकृतिपुरुषविभागज्ञानेन पुंसः कैवल्यलाभो मोक्ष इत्यत्राह—गुणपुरुषविभागज्ञे धर्माधर्मौ कथं बन्धकौ न भवत इति । क्षेत्रक्षेत्रज्ञतत्त्वज्ञानफलविषयः प्रश्नः । सर्वस्यास्य इति गदितेति सम्बन्धः । अत्र प्रकृतिं पुरुषं च मे ब्रूहीति प्रधानं वाक्यं परमपुरुषतच्छक्तिविषयत्वाद् वाक्यान्तराणि तच्छेषभूतान्येवेति विभागः ॥ ५ ॥ ६ ॥ ७ ॥

उत्तरमुत्थापयति—

इत्याधारो भगवान्
पृष्टः शिष्येण तं स होवाच ।
विदुषामप्यतिगहनं
वक्तव्यमिदं शृणु तथापि त्वम् ॥ ८ ॥

इति एवं शिष्येण पृष्टो भगवान् आधारोऽनन्तः स गुरुः तमुवाच ह किल, कथं हे शिष्य ! इदं त्वया पृष्टं वक्तव्यं वस्तु विदुषामप्यतिगहनं दुर्विज्ञेयम् । तथापि वक्ष्यामि ! शृणु तच्छ्रवणे सावधानो भव ॥ ८ ॥

परिहारमारभते—

सत्यमिव जगदसत्यं
मूलप्रकृतेरिदं कृतं येन ।

---

इदम् असत्यं जगत् सत्यमिव मूलप्रकृतेः येन कृतं दर्शितमित्यर्थः ।

तं प्रणिपत्योपेन्द्रं

वक्ष्ये परमार्थसारमिदम् ॥ ९ ॥

इदं परमार्थतयेव भासमानं सत् आत्मनोऽत्यन्तासतः शशविषाणादेश्च जन्मविनाशाभावात् तदुभयाश्रयत्वेन सदसद्विलक्षणम् अत एव

---

एतेन अनिर्वचनीयजगदुत्पत्तिः निराकृता । सत्यमिवेत्यनेन जगत आरोपितत्वं स्पष्टीकृतम् । यद्वा पूर्वपूर्ववासनावशात् सत्यत्वेनापि प्रतीतिः ।

नच असतो जगतो भाने बौद्धमतप्रवेश इति वाच्यम् । बौद्धैन जगति आरोपितसत्त्वस्याप्यनङ्गीकारात् आत्मनस्तेनानित्यत्वाङ्गीकाराच्च वैषम्यात् ।

किञ्च अनिर्वचनीयस्य जगत उत्पत्तिस्वीकारे घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्तिः भ्रमविषयेण विकारिता तु न क्वापि दृष्टचरी ।

किञ्च रजतोत्पादकप्रसिद्धसामग्रीविरहे यया सामग्र्या रजताद्युत्पत्तिस्तयैव सामग्र्या विषयासत्त्वेऽपि ज्ञानाभ्युपगमे बाधकाभावः । किञ्चानिर्वचनीयोत्पत्तिवादे तस्य तस्य रजतत्वाद्याश्रयतया तस्य तद्वति तत्प्रकारकत्वेन प्रमात्वापत्तिश्च । तदुक्तं योगसूत्रे 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठमि'ति । एतेन भावरूपा अनिर्वचनीया अविद्येति कैश्चिदुक्तं परास्तम् ।

सदसद्विलक्षणमिति । इदमयुक्तम् सद्भिन्नत्वादसत्त्वम् असद्भिन्नत्वात्सत्त्वमिति उभयरूपत्वमेव प्राप्नोति तच्च विरोधवारणाय सत्त्वमारोपितमिति भेदाभेदयोरिव तयोर्न विरोधः सदसद्विलक्षणस्य वस्तुनः लोकव्यवहारे क्वाप्यदर्शनात् । अत एव सांख्यसूत्रे 'नासतः ख्यातिर्नृशृङ्गवत्' 'नानिर्वचनीयस्य तदभावात्' इति अनिर्वचनीयख्यातेः खण्डनमारचितम् । तस्मात्सदसत्ख्यातिवादः श्रेयान् तदुक्तं सांख्यसूत्रे 'सदसत्ख्यातिर्बाधाबाधाभ्यामि'ति सूत्रेण ।

भ्रमे ज्ञानाकारस्यैव विषये आरोपः । सन्निकृष्टज्ञानाकारं विहायासन्निकृष्टदूरस्थरजतारोपे मानाभावात् तदा दृष्टमधुना नास्ति इति स्वरूपतो बाधानुभवाच्च यथाहुः 'बुद्धिसिद्धं तु तदसत्' इति ।

असत्यं महदाद्यवन्यन्तं जगद् येन मूलप्रकृतेः स्वमायाशक्तेर्हेतोः सत्यमिव कृतं सृष्टं तमुपेन्द्रं विष्णुं प्रणिपत्य भक्तिश्रद्धापुरस्सरं नत्वा इदं विद्वदनुभवसिद्धं परमार्थसारम् उपनिषदर्थतत्त्वं वक्ष्ये वक्ष्यामि॥९॥

प्रकृतिं पुरुषं च मे ब्रूहीति प्रश्नोत्तरं तावत्संगृह्णाति—

अव्यक्तादण्डमभू-
दण्डाद् ब्रह्मा ततः प्रजासर्गः ।
मायामयी प्रवृत्तिः
संह्रियत इयं पुनः क्रमशः ॥ १० ॥

---

नच ज्ञानलक्षणासन्निकर्षेण हट्टेऽनुभूतरजतस्य प्रतीतिरिति वाच्यम् । ज्ञानलक्षणाया संन्निकर्षत्वे मानाभावात् सुरभि चन्दनं पश्यामीत्यनुव्यवसायस्तु निष्प्रामाणिकः । तत्र सौरभमानं मानसमानुमानिकं वेति न कश्चिद् दोषः ।

ननु स्वप्ने भ्रमादौ च अनिर्वचनीयोत्पत्तेरनङ्गीकारे 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' इति स्वप्नविषयश्रुतिप्रतिपादित सृष्टयसंप्रतिपादनेन 'भेदो वा प्रायदर्शनात' इत्यधिकरणसिद्धान्तेन दुर्बलेन उपसंहारेण रथादिसृष्टिवचनस्य भाक्तत्वादिति तत्त्वम् ।

तथाहि 'उच्चैर्ऋचा क्रियते । उपांशु यजुषा । उच्चैः साम्ना' इति तत्र विधिवाक्ये श्रुता मन्त्रवाचिन ऋगादयः शब्दास्तेन उच्चैस्त्वादयो मन्त्रधर्माः एवंच यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अपि ऋच उच्चैरेव पठनीया इति पूर्वपक्षः सिद्धान्तस्तु असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेन उपसंहारो नेतव्यः उपक्रमे हि वेदशब्दः श्रुतः, त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदः । वायोर्यजुर्वेदः । आदित्यात्सामवेदः । इति उपक्रमगतवेदानुसारेण विध्युद्देशगतानामप्यृगादिशब्दानां वेदपरत्वे सत्यृचोऽपि यजुर्वेदोत्पन्ना उपांशु पठनीया इति एवंच उपसंहारापेक्षया उपक्रमस्य प्राबल्यम् ।

मायामयीति । सदसद्रूपाविद्यामयीत्यर्थः । अयं भावः नियतकालपरिपा-

अव्यक्तात् परमपुरुषेक्षिताद् महदादिक्रमेण अण्डं ब्राह्मम्—अभूत्—अण्डात् पुरुषानुप्रविष्टाद् ब्रह्माभूत् । ततः ब्रह्मणः प्रजासर्गः प्रजानां चराचराणां सर्गो जन्माभूत् । एवम् इयं मायामयी मायोपाधिका पुंसः पुनः प्रवृत्तिः कार्यसृष्टिः क्रमशः संह्रियते संगृह्योपदिश्यते सद्भिः-

नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोका सप्तद्वीपा च मेदिनी ॥ इति ।

नचात्र स्वतन्त्रादव्यक्तादण्डोत्पत्तिरभिप्रेता "सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येने"ति—परमेश्वरस्यैव स्वमायाशक्त्या विश्वात्मना विवर्तितत्वोक्तेः, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै० २-१-१) इति श्रुतेश्च । एवं विश्वनिदानं प्रकृतिः पुरुषश्चेति तयोः स्वरूपं सामान्येनोपदिष्टम् ॥ १० ॥

अथ पुरुषस्य मायातत्कार्यानुप्रवेशवशेनान्तर्यामित्वेन जीवत्वेन चावस्थितस्य स्वरूपं निरूप्यते । तत्र 'मायामयोऽपि' इति, द्वादशार्याभिर्जीवस्य तत्त्वं प्रकाश्यते । यत् तावत् पृष्टं 'दीर्घेऽस्मिन् संसारे संसरतः

---

कानां सर्वप्राणिकर्मणामुपभोगेन क्षये सर्वस्य जगतो मायायां लयो भवति सा च स्वकारणे परमेश्वरे लीयते लयश्चायमपुनर्भावफलको नात्यन्तिको नाशः उत्तरसर्गानुपपत्तेः । नापि सर्वथाऽभानम् प्रतिभासमात्रशरीरस्य वस्तुनोऽनवभासे तदभावस्यैवापत्तेः किन्तु सूक्ष्मेव तिष्ठति कार्यप्रवृत्त्यभावात् स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्गलाक्षासमानाव्यभातप्रायैव । ततोऽप्यासपरिपाकैः प्राणिकर्मभिः प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुत्र्यावाविर्भवतः तत्र परमेश्वरस्य सिसृक्षात्मिकामायावृत्तिर्जायते ततः अण्डम् जायते इति ।

कस्य केन सम्बन्ध, इति तत्राह—

मायामयोप्यचेता
गुणकरणगणः करोति कर्माणि ।
तदधिष्ठाता देही
सचेतनोऽपि न करोति किञ्चिदपि ॥ ११ ॥

पूर्वोत्तरार्धयोः साम्यादार्याविशेषोऽयम् । गुणकरणगणः कार्यकरणसङ्घातो मायामयः—मायाशक्त्यालिङ्गितस्य परमेश्वरस्य विवर्तः सः अचेतनोऽपि कर्माणि शुभाशुभमिश्ररूपाणि करोति यस्तु तदधिष्ठाता तस्याश्रयभूतो देही जीवः, स चेतनोऽपि किञ्चिदपि कर्म न करोति चिदेकरसत्वेन स्वरूपचलनात्मनः कर्मणस्तस्मिन्नसम्भवात् ॥११॥

नन्वचेतनत्वात् स्वतो निश्चेष्टस्य कार्यकरणसङ्घातस्य कथं चेतनसान्निध्यादेव प्रवृत्तिरित्यत्राह—

यद्वदचेतनमपि सन्-
निकटस्थे भ्रामके भ्रमति लोहम् ।
तद्वत्करणसमूह-
श्चेष्टति चिदधिष्ठते देहे ॥ १२ ॥

भ्रामके अयस्कान्तमणौ निकटस्थे अचेतने स्वतो निश्चेष्टमपि लोहं भ्रमति चेष्टते यद्वत्, तद्वत् देहे चिदधिष्ठिते चेतनेन "अहं मनुष्य" इत्यादि प्रकारेण स्वीकृते करणसमूहः कार्यकरणस-

ज्ञातः चेष्टति चेष्टते । वृत्तभङ्गभयात्परस्मैपदम् ॥ १२ ॥

मा भवतु कर्मसु साक्षात्कर्तृत्वमात्मनः, हेतुकर्तृत्वं स्यात् तेन विना बुद्ध्यादीनामप्रवृत्तेरित्यत्राह—

यद्वत् सवितर्युदिते
करोति कर्माणि जीवलोकोऽयम् ।
न च तानि करोति रवि-
र्नकारयति तद्वदात्मापि ॥ १३ ॥

यद्वदयं जीवलोकः सवितर्युदिते कर्माणि स्वस्वाभिमतानि करोति तथापि रविस्तानि न करोति न कारयति च तद्वद् आत्मनि देहं प्रविष्ट एव गुणकरणगणः कर्माणि करोति । एवमपि आत्मा तानि न करोति न कारयति च ।

तदुक्तं भगवता !
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ।
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥ (गी०५-१३-४)इति ।

कर्मेन्द्रियाणि खलु पञ्च तथापराणि
बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः ॥

---

चेष्टतीति परस्मैपदमनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् । अनित्यत्वे मानं तु चक्षिङो ङित्करणमेव । नचेदिदित्त्वन्तत्वाभावसंपादनद्वारा नुमभावार्थं तदिति वाच्यम् इकारस्थानेऽकारपाठेनापि नुमभावस्य संपादयितुं शक्यत्वात् । वृत्तभङ्गभयादिति तु न युक्तम् ऋषेः शब्ददारिद्र्यसूचकतया न्यूनत्वापादकत्वादित्यलम् ।

इत्युक्तलक्षणं पुर्यष्टकमात्मनः संसारसम्बन्धे हेतुः । स च मायामयत्वादवास्तवोऽनादिश्च प्रवाहतः । तेन तत्त्वबोधान्निवर्तत इति श्लोकत्रयार्थः ॥ १३ ॥

अथ "कर्म शुभाशुभफलदमनुभवति गतागतैरिह क" इति प्रश्नोत्तरमाह—

मनसोऽहङ्कारविमू-
र्च्छितस्य चैतन्यबोधितस्येह ।
पुरुषाभिमानसुखदुः-
खभावना भवति मूढस्य ॥ १४ ॥

इह मायाकार्येषु मध्ये मनसो मूढस्याचेतनस्यापि चैतन्यबोधितस्य स्वतादात्म्यं गतेनात्मचैतन्येन प्रकाशितस्य अत एव अहंकार विमूर्च्छितस्य अहंप्रत्ययास्पदीभूतस्य पुरुषाभिमानसुखदुःखभावना भवति 'पुरुषोऽहं' 'दुःख्यहं' 'सुख्यहमि'त्यभिमानो भवतीत्यर्थः ॥१४॥

ततः किमित्यत आह—

कर्त्ता भोक्ता द्रष्टा-
स्मि कर्मणामुत्तमादीनाम् ।

---

मूढस्याचेतनस्य मनसः चैतन्येन प्रकाशितस्य 'अहं सुखी' 'अहं दुःखी'त्याद्यभिमानो भवति । एवं कर्तृत्वादेर्बुद्धिधर्मस्य स्वस्मिन्नसतोऽपि आत्मा स्वस्मिन्नभिन्यते बुद्धितादात्म्याध्यासात्, वस्तुतस्तु शुद्धौ चैतन्यमात्मनि कर्तृत्वादयश्च धर्मा न सन्तीभावः ॥ १४ ॥ १५ ॥

इति तत् स्वभावविमलो
ऽभिमन्यते सर्वगोऽप्यात्मा ॥ १५ ॥

यस्माच्चैतन्यानुप्रविष्टस्य मनसः पुरुषत्वाद्यभिमानः तस्मात् स्वभावविमलः सर्वगोऽपि च आत्मा द्रष्टा प्रमाता अस्मि उत्तमादीनां वैदिकादीनां कर्मणां कर्तास्मि, तत्फलानां भोक्तास्मीति च अभिमन्यते। सर्वगतस्य विषयविशेषद्रष्टृत्वं क्रमद्रष्टृत्वं स्वभावविमलस्य कर्मकर्तृत्वं तत्फलभोक्तृत्वं च न सङ्गच्छते। तथापि पुर्यष्टकतादात्म्याध्यासादात्मनि तत् सर्वमध्यारोपयतीत्यर्थः ॥ १५ ॥

तद्द्वारेण स्थूलदेहसम्बन्धात् सुरनरनारकत्वं च यातीत्याह—

नानाविधवर्णानां
वर्णं धत्ते यथामलः स्फाटिकः ।
तद्वदुपाधेर्गुणभा-
वितस्य भावं विभुर्धत्ते ॥ १६ ॥

यथा लोके अमलः स्फटिकमणिः स्वसन्निहितानां नानाविधवर्णानां बन्धूकादीनां वर्णं धत्ते रक्तः स्फटिक इत्यादि, तद्वद् विभुः आत्मापि गुणभावितस्य प्रकृत्या प्रकाशितस्य देहादिलक्षणस्य उपाधेर्भावं देवत्वमनुष्यत्वादिकं धत्ते स्वीकरोति ॥ १६ ॥

---

यथाऽमलः स्वच्छः स्फटिकः जपाकुसुमादीनां लौहित्यप्रतिबिम्बनाद् 'लोहितः स्फटिक' इति प्रतीतिविषयो भवति तद्वदात्मापि गुणेन प्रकृत्या प्रकाशितस्य कर्तृत्वादिभावं धत्ते ॥ १६ ॥

सर्वव्याप्तोऽप्युपाधिवशाद् देहाद्देहान्तरं लोकाल्लोकान्तरं च यातीत्याह—

गच्छति गच्छति सलिले
दिनकरबिम्बं स्थिते स्थितिं याति ।
अन्तः करणे गच्छति
गच्छत्यात्मापि तद्वदिह ॥ १७ ॥

इह लोके सलिलप्रतिबिम्बितं दिनकरबिम्बं सलिले गच्छति सति गच्छतीव स्थिते स्थितिं यातीव तद्वत् आत्मापि अन्तः करणप्रतिबिम्बितः अन्तः करणे गच्छति सति गच्छतीव स्थिते स्थितिं यातीवेत्यर्थः ॥ १७ ॥

अदृश्योपि दृश्यत्वं च तत्सम्बन्धाद् यातीत्याह—

राहुरदृश्योऽपि यथा
शशिबिम्बस्थः प्रकाशते जगति ।
सर्वगतोपि तथात्मा
बुद्धिस्थो दृश्यतामेति ॥ १८ ॥

---

यथा राहुः सन्नपि तमःस्वभावत्वान्न दृश्यते चन्द्रबिम्बे प्रतिबिम्बितस्तु दृश्यते तद्वत् सर्वत्र वर्तमानोऽप्यात्मा दृश्यतां नैति बुद्धिस्थस्तु दृश्यताम् अस्मत्प्रत्ययविषयतां चैति तदुक्तं श्रीशङ्कराचार्यैः 'नायमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात्' इति ॥ १८ ॥

यथा राहुरदृश्योऽपि शशिबिम्बस्थः, प्रकाशते दृश्यो भवति, तथा सर्वगतोऽपि बुद्धिस्थ आत्मा अदृश्योऽपि दृश्यतामेति अहं प्रत्ययविषयो भवतीत्यर्थः । तदुक्तं श्रीभगवत्पादैः "न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वाद्" इति ॥ १८ ॥

यदि प्रमातृत्वं कर्तृत्वं भोक्तृत्वं चात्मन औपाधिकं किं तर्हि निजं रूपमित्यत्राह—

सर्वगतं निरुपमम-
द्वैतं तच्चेतसा गम्यम् ।
यद्बुद्धिगतं ब्रह्मो-
पलभ्यते शिष्य बोध्यं तत् ॥ १९ ॥

यद् बुद्धिगतं तत् ततो हेतोः चेतसा अस्मत्प्रत्ययेन गम्यं च ब्रह्म आत्मस्वरूपम् उपलभ्यते, तत् सर्वगतं देशकालवस्त्वनवच्छिन्नं निरुपमं परमानन्दस्वरूपम् अद्वैतं सजातीयविजातीयस्वगतभेदशून्यं चिदेकरसं बोध्यम् ॥ १९ ॥

नात्र बुद्धिशब्देनान्तः(१)करणमात्रं विवक्षितं किन्तु सूक्ष्मं शरीर-

---

हे शिष्य यस्माद् बुद्धिगतं सद् ब्रह्मोपलभ्यते अतःसर्वगतं निरुपमं परमानन्दस्वरूपं चिदेकरसं बोध्यम् ॥ १९ ॥

---

(१) अस्या आर्यायाः प्राक् 'आदर्शे मलरहिते यद्रूपं विचिन्वते लोकाः । आलोकयति तथात्मा विशुद्धबुद्धौ स्वमात्मानम्' इति काचिदार्या पठ्यते ख० पुस्तके ।

मित्याशयेनाह—

बुद्धिमनोऽहङ्कारा-
स्तन्मात्रेन्द्रियगणाश्च भूतगणः ।
संसारसर्गपरिर-
क्षणक्षमाः प्राकृताः हेयाः ॥ २० ॥

बुद्धिर्महत्तत्त्वम् मनोऽन्तः करणं, अहङ्कारोऽहन्तत्त्वम् । तन्मात्राणि शब्दस्पर्शरूपरसगन्धाः । इन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाः पञ्च कर्मेन्द्रियाणि च । तन्मात्रगणाश्च इन्द्रियगणश्च तन्मात्रेन्द्रियगणाः । भूतानि व्योमवायुतेजोजलावनयः तेषां गणो भूतगणः । त एते प्राकृताः प्रकृतिसम्भूताः । संसारसर्गपरिरक्षणक्षमाः संसारस्य सर्गे उत्पादने परिरक्षणे च क्षमाः शक्ताः आत्मनः संसारोपाधिभूता इत्यर्थः । अत एव मुमुक्षुभिर्हेया अनात्मत्वेन परित्याज्याः । एवं प्रकृतिपुरुषौ महदाद्यवन्यन्तानि तत्कार्य्याणि चेति पञ्चविंशतितत्त्वान्यत्र दर्शितानि । प्राकृता इत्यनेन 'अव्यक्तादण्डमभूदि'त्यत्र महदादिक्रमेणेत्यावेदितं भवति ॥ २० ॥

आत्मनः संसारस्यौपाधिकत्वेन फलितमर्थमाह—

धर्माधर्मौ सुखदुः-
खकल्पना स्वर्गनरकवासश्च ।

---

बुद्धिमनोऽहङ्कारादयः सर्वे प्राकृताः संसारसर्गपरिरक्षणाय मायया कल्पिता अतो हेयाः परमार्थिकं वस्तु ब्रह्मैव तु ज्ञेयमित्याशयः ॥ २० ॥

वस्तुविचारे क्रियमाणे इह परमार्थे आत्मतत्त्वे धर्माधर्मादयो न सन्ति किन्तु

उत्पत्तिनिधनवर्णा-

श्रमा न सन्तीह परमार्थे ॥ २१ ॥

इह आत्मनि परमार्थे वस्तुविचारे क्रियामाणे धर्माधर्मादयो न सन्तीत्यन्वयः औपाधिकस्य स्फटिकलौहित्यादिवद्वास्तवत्वायोगात् । धर्माधर्मौ शुभाशुभकर्मसंस्कारौ । सुखदुःखयोस्तत्फलयोः कल्पनानुभूतिः सुखदुःखकल्पना । तदर्थं स्वर्गनरकयोर्वासः स्वर्गनरकवासः धर्माधर्मोद्भवस्थानभूतेऽस्मिन् लोके उत्पत्तिनिधनवर्णाश्रमाः उत्पत्तिश्च निधनं च वर्णश्चाश्रमश्च तथोक्ताः ॥ २१ ॥

नन्वसतां कथं भानमित्यत्राह—

मृगतृष्णायामुदकं

शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।

तैमिरिकचन्द्रयुगव-

द्भ्रान्तं निखिलं जगद्रूपम् ॥ २२ ॥

---

बुद्धिप्रतिबिम्बितत्वात् बुद्धिगता एव धर्माधर्मादयस्तत्र भासन्ते तद्वाद्वायैव च धर्मशास्त्रादिव्यवस्था । औपाधिकस्य धर्माधर्मादेर्वास्तवत्वायोगात इति भावः ॥२१॥

अयमाशयः मृगतृष्णादिभ्रमे ज्ञानाकारस्यैव विषये आरोपः । तथा च स्मृतिः

विप्र पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।

स्वप्नभ्रममदाद्येषु सर्वैरवानुभूयते इति ।

सन्निकृष्टज्ञानाकरं विहायासन्निकृष्टरजताद्यारोपे अनिर्वचनीयरजतोत्पत्तौ वा मानाभावात् । 'तदाहक्षमधुना नास्तीति' बाधानुभवस्यानुपपत्तेश्च ।

न चायं पारमर्थिकत्वेन रजताद्यभावावगाही प्रत्ययः, स्वरूपतो रजताद्यभावावगाहित्वात् । चाकचिक्यादिविषयदोषाच्च चक्षुर्द्वारा निर्गतान्तः करणवृत्तेः सावयवद्रव्यतया रजतसंस्कारवत्याः पुरोऽवस्थितवस्तुसंबन्धे तच्चाकचिक्यादुद्बुद्धसंस्कारवशाद्विषयदेशावच्छेदेन रजतज्ञानाकारेण परिमाणः ।

अनिर्वचनीयरजतोत्पत्तेरभावादेव स्त्रियाम् इति सूत्रे महाभाष्ये उक्तम् ।

"असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् कथं पुनरसल्लिङ्गं शक्यं द्रष्टुम्। मृगतृष्णावत् । तद्यथा मृगास्तृपिताः अपां धाराः पश्यन्ति न च ताः सन्ति यथा गन्धर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते" इति अनेन बहिर्देशे असतो रजतस्य भ्रमे भानमिति न तु हृदस्थरजतस्य अनिर्वचनीय रजतस्य वा । हरिरप्याह–

यथा सलिलनिर्भासो मृगतृष्णासु जायते ।

जलोपलब्ध्यनुगुणाद्बीजाद् बुद्धिर्जलेऽसति ।

भ्रमे विशेषदर्शनात् प्राक् बहिःसत्त्वेन प्रतीतिस्तु तत्राधिष्ठानगतसत्तारोपात् ।

अतएव 'सदसत्ख्यातिर्बाधाबाधाभ्यामि'ति सांख्यसूत्रे उक्तम् । शुक्तौ रजतादिकं च अखिलं जगद्रूपं भ्रान्तं भ्रमविषयः तैमरिकचन्द्रयुगवत् ।

इदमत्र तत्त्वम् रजतावयवानां रजतोत्पादकानामसत्त्वेन कथं शुक्त्यादौ रजतोत्पत्तिः स्यात् ।

न च लोकप्रसिद्धसामग्र्या प्रातिभासिकरजतोत्पादः किं तर्हि काचकामलादिदोषदूषितलोचनस्य पुरोवस्थितवस्तुसंबन्धे सति इदमाकारा चाकचिक्याकारान्तः करणवृत्तिरुदेति तस्यां वृत्ताविदमवच्छिन्नं चैतन्यं प्रतिबिम्ब्यते ततश्च विषयचैतन्यनिष्ठा शुक्तित्वप्रकाशिकाऽविद्या चाकचिक्यादिदर्शनोद्बुद्धरजतसंस्कारसहिता रजतरूपार्थाकारेण परिणमते इति वाच्यम् ।

यथाऽनया सामग्र्या प्रसिद्धसामग्र्यतिरेकेऽपि रजतमुत्पाद्यते तथा राजतासन्निकर्षेऽपि रजतज्ञानमेवोत्पाद्यताम् किं रजतोत्पादकल्पनयेत्यदोषात् किं च अनिर्वचनीयरजतोत्पत्त्यङ्गीकारे अनर्वचनीयरजतस्याश्रयत्वस्य शुक्तिकादौ 'इदंरजतम्' इतिज्ञानस्य भ्रमत्वानापत्तिः । तद्वक्ष्यति—रज्ज्वां नास्ति भुजङ्ग इत्यादिना इत्यलम् ॥ २२ ॥

यथा मृगतृष्णायां मरुभूमिस्थमध्याह्नार्कमरीचिमण्डल उदकं, शुक्तौ रजतं रज्ज्वां भुजङ्गम्, इत्येतत् । तैमिरिकचन्द्रयुगवत् । तिमिरं चक्षुर्दोषः, तेन सम्भूतं तैमिरिकं चन्द्रस्य युगम् चन्द्रयुगं तैमिरिकं च तच्चन्द्रयुगं च तैमिरिकचन्द्रयुगं, तद्वद् भ्रान्तं भ्रममात्रेण सिद्धं न वस्तुभूतं सत्त्वे बाधानुपपत्तेरसत्त्वे प्रत्यक्षप्रतीत्यनुपपत्तेः सदसत्त्वे द्वयोरप्यनुपपत्तेश्च सदसद्भ्यामनिर्वाच्यत्वान्मिथ्याभूतं तथा निखिलं जगद्रूपं भ्रान्तमात्माविद्यावशात् तत्रैवाध्यस्तमित्यर्थः । मिथ्यार्थप्रतीतेरप्रसिद्धिपरिहारायानेकदृष्टान्तोपादानम् । तथा च प्रयोगः विवादपदं मिथ्या दृश्यत्वाद् विभक्तत्वादनात्मत्वाच्च मृगतृष्णिकोदकादिवादिति । किं पुनरिदं मिथ्यात्वं नाम । अधिष्ठानतत्त्वज्ञानबाध्यत्वमिति प्रतीमः । किमेतदनुमानं स्वस्यापि मिथ्यात्वं साधयेत् किं वा न । नो चेत् तत्रैव दृश्यत्वादीनां व्यभिचारः । साधयति चेत् स्वव्याघातकता । सत्यम् । आत्मघातकमेवैतदागमवत् । सोऽपि "नेह नानास्ति किञ्चन" (बृ० ४–४–१९) इति ब्रह्मणि सर्वद्वैतप्रतिषेधं कुर्वन् द्वैतान्तर्भूतत्वादात्मानमपि प्रतिषेधति । एवं तदनुग्राहकतर्करूपमिदमनुमानमपीति सन्तोष्टव्यम् ।

न च स्वव्याघातकत्वं लोके क्वाप्यदृष्टमिति वाच्यम् एधो नाशके ज्वलने स्वनाशकत्वदर्शनात् । एवमपि मिथ्यार्थस्य कथं तत्त्वावेदकत्वमिति चेत् को नाम वक्ति वादी मिथ्याभूतं वस्तुतत्त्वावेदकमिति । तत्त्वं ह्यस्माकमात्मैव, स च स्वप्रकाश इति कथं मिथ्याभूता आगमादयस्तत्त्वं बोधयेयुः । किं तर्हीह तैः । इत्थं मिथ्याभूताया अविद्याया इतोऽपनयनमात्रम् । तच्च मिथ्यात्वेऽपि सम्भवति स्वाप्नसिंहादिवत् । यथा स्वप्ने

दृष्टः सिंहादिर्मिथ्याभूतोऽपि मिथ्याभूतं स्वाप्नप्रपञ्चं समूलमपनयति, तथागमादिर्मिथ्याभूतोऽपि मिथ्याभूतं जाग्रदादिद्वैतमपनयतीति किन्नाभ्युपगम्यते। किञ्चान्यद् मिथ्यार्थस्य तत्त्वावेदकत्वमपि दृश्यते, दर्पणगतमुखप्रतिविम्बादेस्तात्त्विकमुखसंस्थानादिप्रकाशकत्वात् स्वाप्नकामिन्यादेः सम्पत्प्राप्त्यादिबोधकत्वाच्च! यथाहुः स्वप्नाध्यायविदः—

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयाद् (छा० ५-२-९)॥"

इति। एवं प्रतिमादौ विष्ण्वादिदृष्टिरपि तत्तत्त्वबोधोपायत्वेन मिथ्यात्वेऽपि सर्वैरभ्युपगम्यते। तस्मात् प्रपञ्चमिथ्यात्वानुमाने न दोषः कश्चिद्। विपक्षे बन्धस्य सत्यत्वेनानिर्मोक्षप्रसङ्गो बाधः।

ननु दृश्यत्वमात्मन्यस्ति, अस्मत्प्रत्ययविषयत्वोक्तेरिति चेद् न तस्य बुद्धिसम्बन्धोपाधिकत्वेनावास्तवत्वात् केवलस्यात्मनोऽहंप्रत्ययविषयत्वाभावाच्च। स हि चित्प्रकाशावेशवशेन बुद्ध्यादिकम् अहं सुखी दुःखीत्यादिरूपेण भासयति। तत् कथमहंप्रत्ययः प्रत्यगात्मानं प्रकाशयेत्।

ननु केवलस्याप्यात्मनः शास्त्रीयदृशा दृश्यत्वमस्ति अन्यथा तत्र शास्त्रवैयर्थ्यादिति चेद् उक्तोत्तरत्त्वाद् आत्मतत्त्वाज्ञानापनयनमात्रमागमज्ञानं करोति न पुनरात्मानं प्रकाशयति तस्य स्वप्रकाशत्वादिति। श्रुतिश्च 'अदृश्यो न हि दृश्यते" इति। तदेवं प्राकृतिकपुर्यष्टकावच्छिन्नश्चेतनः संसरति तस्य चायं संसारो मायीयत्वान्मिथ्यैवेति प्रतीचः स्वरूपमुपदिष्टम्॥ २२॥

यत् पुनः पृष्टं "कोशकार इव कर्मगुणजालबद्धो यः संसरति स

जीवः क "इति तत् परिहरन् "यद्वद् दिनकर" इति चतुर्दशार्याभिः परस्वरूपं निरूपयति—

यद्वद्दिनकर एको
विभाति सलिलाशयेषु सर्वेषु ।
तद्वत् सकलोपाधि-
ष्ववस्थितो भाति परमात्मा ॥ २३ ॥

यद्वत् सर्वेषु सलिलाशयेषु जलाशयेषु अवस्थितो दिनकर एक एव विभाति अनेकधा भाति तद्वत् सकलोपाधिषु सकलेषूपाधिषु कार्यकरणसङ्घातेष्ववस्थितः परमात्मैक एवानेकधा भाति । श्रुतिश्च—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा

---

ननु लोके सुखादिवचित्र्यानुभवात् गौतमादितन्त्रे तथैव प्रतिपादनाच्च आत्मनां नानात्वमेवास्थीयताम् तत्कथं सर्वगतं ब्रह्मैकमेवेत्युक्तमित्याशङ्क्य तन्नानात्वं भ्रम एवौपाधिकं चेत्याह-दिनकर इति ।

यथा एक एवाकाशस्थ आदित्यः तत्तज्जलाशयेषु प्रतिहतचक्षुषा उपाधिवशात् वैवासनावशाच्च नानात्वेन गृह्यते तथा सकलोपाधिषु घटादिष्वपि विशेष्यतयाऽवस्थितः एक एव परमात्मा नानात्वेन भाति । तत्तदाकारादिविशिष्ट एव ब्रह्मणो द्रव्यादित्वात् । अत एव 'द्रव्यं नित्यमि'ति महाभाष्ये उक्तम् । अत्र कैयटः 'तत्तदाकारं तत्तद्व्यङ्ग्यजातिरूपं वा असत्यमुपाधिमाश्रित्य तदवच्छिन्नं ब्रह्मैव द्रव्यम्' इति ।

एतेन मृदोऽनित्यत्वाद् द्रव्यं नित्यमित्ययुक्तमित्यपास्तम् । मृदोप्याकारमात्रत्वेन ब्रह्मण्येव पर्यवसानात् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतिवत् । तथा च श्रुतिः ।

यथा स्वयंज्योतिरात्मा विवस्वानेपोऽभिन्नो बहुधैकोऽनुगच्छन् ।

(श्वे० ६-११) इति । स्मृतिश्च—

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवद् ॥ इति ॥ २३ ॥

यदैवं परमात्मैव जीवात्मा तदा मनुष्योऽहमिति बुद्धिर्भ्रान्तिरेवेत्याह—

खमिव घटादिष्वन्त-
र्बहिः स्थितं ब्रह्म सर्वपिण्डेषु ।
देहेऽहमित्यनात्मनि
बुद्धिः संसारबन्धाय ॥ २४ ॥

घटादिषु खमाकाशमिव ब्रह्म सर्वपिण्डेषु सर्वेषु पिण्डेषु देहेष्वन्तर्बहिश्च स्थितं व्याप्तम् उपाधिपरिच्छिन्नतया तदपरिच्छिन्नतया च तत्र तत्र वर्तमानम् "एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ( बृ०-४-५-१३ ) इति श्रुतेः । अतः अनात्मनि देहेऽहमिति बुद्धिः संसारबन्धाय, संसारबन्धहेतुर्भ्रान्तिरेवेत्यर्थः ॥२४॥

---

उपाधिना क्रियते भिन्नरूपो देवःक्षेत्रेष्वेवमजोयमात्मा । इति ।
यथा भिन्नजलेष्वेकः आदित्यो भासते पृथक् ।
एक आत्मा शरीरेषु भिन्नवद्भासते तथा । इति स्मृतिश्च ॥ २३ ॥

संसारहेतुं भ्रान्तिमाह—खमिवेति । घटादिषु अन्तर्बहिश्च यथाऽऽकाशं वर्तमानं तथा सर्वपिण्डेषु सर्वदेहेषु अन्तर्बहिश्च स्थितं ब्रह्म इति देहस्यानात्मत्वम् । इति अनात्मनि देहेऽहं गौरः अहं मनुष्य इति या बुद्धिः सैव अविद्या संसारहेतुरित्यर्थः । तदुक्तं योगसूत्रे अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति । एतेन अनिर्वचनीया भावरूपाऽविद्येति मतमपाकृतं वेदितव्यम् इति ॥ २४ ॥

कथं पुनरात्मा प्रतिपत्तव्य इत्यत्राह—

सर्वविकल्पनहीनः
शुद्धो बुद्धोऽजरामरः शान्तः ।
अमलः सकृद्विभात-
श्चेतन आत्मा खवद्व्यापी ॥ २५ ॥

चेतनः दृश्यत्वेन घटादिवदचेतनाद् देहाद् व्यतिरिक्तो जीव आत्मा परमात्मैवेत्यन्वयः । तत्साधनार्थानि विशेषणानि । सर्वविकल्पनहीनः सर्वैर्विकल्पनैः अस्ति वा नास्ति वायं, नित्योऽनित्यो वा एकोऽनेको वेत्याद्यैः संशयैर्विहीनः सर्वसंशयसाक्षित्वात् ।

ननु तथात्वं देहस्याप्यस्ति प्रत्यक्षत्वादिति स एवात्मा स्याद् नेत्याह—शुद्ध इति । विण्मूत्रभाजन ( त्वात् ) त्वङ्मांसपिण्डात्मकत्वाच्चाशुद्धस्य देहस्य नात्मत्वमित्यर्थः । तथापि प्राण एवात्मा स्यात् तस्य निर्लेपत्वेन शुद्धत्वादित्यत उक्तं—बुद्ध इति । बोधशक्तिहीनत्वात् प्राणस्य बाह्यवायुवदनात्मत्वमित्यर्थः । एवं चेन्मन एवात्मा स्यादित्यत उक्तम् अजरामर इति । सुषुप्त्यादावभावेन मनसो नश्वरत्वानात्मत्वमित्यर्थः । तर्हि बुद्धिसन्तान एवात्मा स्यात् तस्याविच्छिन्नप्रवाह

---

ननु किंस्वरूपस्तर्हि आत्मा—सर्वविकल्पैः सर्वविशेषैर्हीनः 'निरवद्यं निरञ्जनम्' इति श्रुतेः । शुद्धः पापरहितः 'शुद्धमपापविद्धम्' इति श्रुतेः । बुद्धः बोधस्वरूपः 'विज्ञानं ब्रह्मे'ति श्रुतेः । अजरोऽमर इति उत्पत्त्यादिषड्विधभावविकाररहितः । शान्तः निष्प्रपञ्चः 'शिवमद्वैतमि'ति श्रुतेः । अमलः न विद्यते मलमज्ञानकार्यताक्ष

त्वादित्यत उक्तं शान्त इति । बुद्धिसन्तानस्य जन्मादिविकारवत्त्वादात्मनश्च सर्वविकारद्रष्टृत्वेन निर्विकारत्वान्नात्मत्वमित्यर्थः । तर्हि नित्यसिद्धं शून्यमेवात्मा स्यादित्यत उक्तम्—अमल इति । शून्यस्य संवृतिलक्षणेन मलेनावृतत्वात् सर्वावरणसाक्षित्वेनात्मन्यविद्यादिमलावरणासम्भवाच्चानात्मत्वमित्यर्थः । तथापि बुद्ध्यादिनवगुणविशिष्टोऽहंप्रत्ययगम्यो जडद्रव्यविशेष एवात्मा स्यादित्यत उक्तं—सकृद्विभात इति । नित्योदितानस्तमितप्रकाशरूप इत्यर्थः 'तमेव भान्तमनु भाति सर्वम्' (मु० २-२-१०) इति श्रुतेः । एवम्भूतत्वेऽपि क्षेत्रज्ञान्तरात् क्षेत्रेभ्यश्च भिन्नः पुरुष आत्मा स्यादित्यत उक्तं खवद्व्यापीति । सर्वदेशकालवस्त्वनुगतस्वरूप इत्यर्थः । अणुपरिमाणत्वे जीवस्य सकृदेवसर्वावयवगत वेदनानुसन्धानं न घटेत परिच्छिन्नत्वे मनआदिवज्जडत्वं च प्रसज्येत, मध्यमपरिमाणत्वे घटादिवद् दृश्यत्वमनित्यत्वं च स्याद् । अतोऽस्य परिशेषात् परममहत्त्वं सिध्यतीत्याशयः । जीवः परमात्मैव निर्विकल्पत्वादियोगित्वाद् विपर्ययेण घटवदित्यनुमानमिह प्रयुक्तम् ।

न चात्राद्वैतवादिनो दृष्टान्तासिद्धिः परसिद्धेन परो बोधनीय इति न्यायाद् व्यावहारिकस्य द्वैतस्याङ्गीकृतत्वाच्च । वस्तुगत्या वादिप्रतिवादिभेदादिकमपि नास्तीति कः कं प्रति किं साधयेद् दूषयेद्वा । तथा च श्रुतिः—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र वा अस्य सर्वमात्मैवाभूत् तत् केन कं पश्येद्" (बृ० २-४-१४) इति । ये पुनर्जीवा-

---

यस्य सः 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतेः । सकृद्विभातः 'सकृद्विभात' इति श्रुतेः । चेतनः । चैतन्यात्मा इति पाठे चैतन्यस्वरूपः 'प्रज्ञानं ब्रह्मे'ति श्रुतेः । खवद्व्यापी आकाशवदपरिच्छिन्नः । आत्मेत्यर्थः ॥ २५ ॥

दात्मान्यः कश्चित् पर एव नास्तीति साध्यधर्मस्याप्रसिद्धिं मन्यन्ते, तेषा-
मपि सामान्यतः सिद्ध एवासौ, नो चेत् तन्निषेधानुपपत्तेः । यथाहुः—

"लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः" ॥

इति । विपर्ययेऽन्यतरस्यानात्मत्वापत्तिर्बाधः । आत्मनोऽन्यश्चास-
वात्मा चेति हि विरुद्धम् । तदेवं ब्रह्मैवाहमस्मीत्यात्मा प्रतिपत्तव्यः "त-
त्त्वमसि" (छा० ६ ८-७) "अहं ब्रह्मास्मि" इत्यादि महावाक्यप्रमा-
(स्वार) स्याद् दर्शिततर्करूपानुमानाच्चेति सिद्धम् ॥ २५ ॥

स्यादेतत् 'सर्वगतं निरूपमद्वैतमि'ति यदात्मनः सजातीयविजातीय-
स्वगतभेदशून्यत्वमुक्तम् । तत्र स्वगतभेदः सजातीयभेदश्च यद्यपि श्रु-
युक्तिभ्यामाशङ्क्य निरस्तौ एकः परमात्मैवाप्सु प्रतिबिम्बितार्कवदने-
धोपाधिभेदेन भासत इत्युपपादितत्वात् तथापि विजातीयभेदो जाग-
समष्टिव्यष्टिदेहात्मन उपाधेः पृथक् सत्त्वादिति । तत्राह—

रसफाणितशर्करिका-
गुडखण्डा विकृतयो यथैवेक्षोः ।
तद्वदवस्थाभेदाः
परमात्मन्येव बहुरूपाः ॥ २६ ॥
विज्ञानान्तर्यामि-
प्राणविराड्देहजातिपिण्डान्ताः ।

---

आत्मनोऽस्थाभेदमाह—यथेक्षोः रसफाणितादयो विकृतयस्तथा आत्मनो
बहुरूपा विज्ञानान्तर्यामिप्रभृतयो व्यवहारा भवन्ति ।

व्यवहारास्तस्यात्म-

न्येतेऽवस्थाविशेषाः स्युः ॥ २७ ॥

प्राथमिकं मधुरद्रवरूपं रसः, पाकपिच्छिलं तत् फाणितं, शर्करिका-पञ्चधारारूपं, गुडः पाकातिशयपिण्डीभूतरूपं, खण्डास्तच्छकलानि, रसश्च फाणितं च शर्करिका च गुडश्च खण्डाश्च रसफाणितशर्करिका-गुडखण्डाः । ते यथेक्षोर्विकृतय एक इक्षुरस एव तद्वत् परमात्मनि एकस्मिन्नेव बहुरूपा अन्योन्यं विलक्षणाकारा अवस्थाभेदा रूपविशेषा भवन्ति । के ते विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः विशिष्टं सर्वोपरिष्टाद् वर्तमानं मूलप्रकृतेः परं चिदचिद्भेदमप्राप्तं ज्ञानं चैतन्यं विज्ञानं ब्रह्म "विज्ञानमानन्दं ब्रह्म" (बृ० ३९-२८) इति श्रुतेः । ( अन्तर्यामी पृथिव्यादियमयिता ) "अन्तर्याम्यमृत" ( बृ० ३-७-३ ) इति श्रुतेः । प्राणस्त्रिगुणात्मिकायां सत्त्वगुणप्रधानायां जडायां स्वमायाशक्त्यां प्रतिबिम्बितं तज्जीवरूपम् ।

प्राणास्तु प्रणवे जीवे जीविते परमात्मनि ।
इन्द्रिये वायुभेदे च बलान्तर्यामिणोरपि ॥

इति स्मरणात् । तावेतौ चिदचिदात्मना विवर्त्तमानस्य विज्ञानस्य चित्कोटिगतौ "द्वा सुपर्णा सयुजा सखाये" (श्वे ४-६) ति श्रुति प्रसिद्धौ भेदौ । विराड्देहः समष्टिशरीरं पञ्चीकृतपृथिवीकार्यत्वात् पृथिवीवदवादिमायान्तैस्तत्त्वैर्दशगुणोत्तरवृद्धैरावृतं मनआदिषोडशवि-

---

ननु निरुपाधिब्रह्मण एव विज्ञानरूपत्वाद्विज्ञानमित्यवस्थावर्णनमयुक्तमिति चेन्न नामवैशिष्ट्येनावस्थात्वोक्तेरदोषात् ॥ २६ ॥ २७ ॥

कारोपेतं पञ्चाशत्कोटियोजनविस्तीर्णं ब्रह्माण्डम् । जातिपिण्डा देवत्वमनुष्यत्वपशुत्वपक्षित्वसरीसृपत्वस्थावरत्वादिजातिभेदयुक्ता व्यष्टि देहाः । एतावाचित्कोटिगतौ विज्ञानस्य भेदौ ।

ननु चैतन्यं कथं चेत्यात्मना विवर्त्तेत ।

नन्वचेतना रज्जुः कथं चेतनसर्पतया विवर्त्तते । रज्जुतत्त्वाज्ञाना चेत् तर्हि चैतन्यमपि तदज्ञानाच्चेत्यात्मना विवर्त्तताम् ।

ननु मायामपि चेत्यान्तर्भूता तत् कथं सर्वं चेत्यं मायया चेतने ऽध्यस्तं भवेदिति चेद् न मायासम्बन्धोऽप्यस्य मायया, तस्या अपि चेत्यान्तर्भूतत्वमित्युररीकरणात् । न चात्रात्माश्रयतादोषः । "न हि मा यायामघटितं किञ्चिदि"ति न्यायात् । यथाहुः—

"दुर्घटत्वमविद्याया भूषणं न तु दूषणम् ।"

इति । तस्मान्मायासम्बन्धस्यापि तत्कार्यसम्बन्धस्येव मायैव हेतुः तदुक्तमाचार्यैः—

द्वारं तमोऽन्वयमपेक्ष्य दृशा हि दृश्यं ।
सङ्गच्छते सकलमत्र न वो विवादः ॥
मोहोऽपि दृश्यवपुरत्र च संवदध्वे ।
तस्मात् तदन्वयनिमित्तमपीह मोहः ॥

इति । तस्मात् समष्टिव्यष्टिस्थूलसूक्ष्मदेहतत्कारणान्यचेतनान्यपि चेतनस्यैवाघटितघटनापटीयसो रूपाणि, तथा च श्रीवैष्णवे—

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
त(दे)वार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥

इति । अनुगृहीतं च भगवता—

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत् स्यान्मया भूतं चराचरम् (गी० १०-३९)

इति । चिद्विवर्त्तश्चेत्यमित्यत्र सद्भिर्युक्तिश्चोपदिश्यते—

प्रागिवार्थोऽप्रकाशः स्यात् प्रकाशात्मतया विना ।
न च प्रकाशो भिन्नः स्यादात्मार्थस्य प्रकाशता ॥

इति । अन्तशब्दः स्वरूपवाची "अन्तोऽस्त्र्यवसिते मृत्यौ स्वभावे निश्चयेऽन्तिके" इति । अत्र रसस्थानीयं विज्ञानं, फाणितस्थानीयोऽन्तर्यामी, शर्करिकास्थानीयः प्राणः, गुडस्थानीयो विराड्देहः, तत्खण्डस्थानीया जातिपिण्डाः । विज्ञानं चान्तर्यामी च प्राणश्च विराड्देहश्च जातिपिण्डाश्च तथा तदन्ताः तत्स्वरूपाः ।

हन्त तर्हि परमात्मनो महान् स्वगतो भेदः प्राप्तः न च तदौपनिषदानामिष्टम् "एकम्" "एव" "अद्वितीयमि"ति पदत्रयेण श्रुतौ त्रिविधस्य भेदस्य बाधितत्वाद्, इतरथा मृदादिवद् विकारित्वापत्तेश्चेत्यत्राह—एते विज्ञानादिरूपाः तस्य चिन्मात्राकारस्यापरस्य आत्मन्यवस्थाविशेषाः चिदचिद्भेदाः चिद्भेदा अचिद्भेदाश्च व्यवहाराः व्यवहारोऽभिज्ञाभिवदनम् उपादानमर्थक्रियेति चतुर्विधः तद्भेदमात्रसिद्धभेदाः न स्वरूपभेदवन्तः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० ६-१-४) इति "अजायमानो बहुधा विजायत" इति च श्रुत्यायमर्थ आविष्कृतः । एका विज्ञानावस्थैव वस्तुसती मायोचीर्णरूपत्वाद् रज्ज्वस्थावद् अव-

स्थान्तराणि मायाकार्यत्वादवस्तून्येवेत्यर्थः। श्रुतिश्च—

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते॥

इति॥ २६॥ २७॥

ननु चिदचिद्भेदस्य तदवान्तरभेदस्य च मिथ्यात्वेऽर्थक्रियाकारि[त्वं] न सङ्गच्छते। न खलु मृगतृष्णिकोदकस्नानेन तुष्यति कश्चिदित्यत्राह—

रज्ज्वां नास्ति भुजङ्गः
सर्पभयं भवति हेतुना केन।
तद्वद् द्वैतविकल्प-
भ्रान्तिरविद्या न सत्यमिदम्॥ २८॥

अयं सर्प इति भ्रान्त्यधिष्ठानभूतायां रज्ज्वां भुजंगो नास्ति ना[यं] सर्प इत्युत्तरकालं बाधितत्वाद् भुजङ्गोत्पत्तिहेतोस्तत्राभावाच्च तत् के[न]

---

ननु सर्वस्य प्रपञ्चस्य मिथ्यात्वे कथं लौकिको व्यवहारो न हि शुक्तिरजतेन सु[वर्ण]निर्माणं संभवतीत्यत आह—रज्ज्वामिति।

अयं भावः रज्ज्वां सर्पोत्पादकानां सर्पावयवानामभावेन सर्पो नास्ति तर्हि [के]न हेतुना भयं भवति। भ्रमरूपाविद्ययेति चेत् तद्वत्, इदं द्वैतविकल्पभ्रान्तिः [अ]न्तर्याम्यादिभ्रन्तिः न सत्यमित्यर्थः। आत्मनि वासनारूपाविद्यामूलकं वास[ना]रूपसूक्ष्मोपाधिवैशिष्ट्येनापि ब्रह्मभानं मननादिपरिपाकवतामस्त्येव। अविद्या[या] आध्यासिकसम्बन्धेन परमात्मैवाश्रयः। भ्रमाधिष्ठानत्वमेव तद्विशेष्यत्वरूपं विव[र्तो]पादानत्वम्।

स्पष्टं चैतद्—अनादि निधनं ब्रह्मेत्याद्यश्लोके हरिग्रन्थे 'तत्त्वादप्रच्यु[तस्य] वस्तुनो भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविषयप्रति[भा]

हेतुना सर्पभयं सर्पाद् भयं भ्रान्तस्य भवति यदि मिथ्यावस्तुनः कार्यकरत्वं न भवेत् । मृगतृष्णिकोदकभ्रान्तेरपि प्रथमत आह्लादकरत्वमस्ति । एवं शुक्तिरूप्यभ्रान्त्यादेरपि द्रष्टव्यम् । अतो यद्वद् रज्जुसर्पभ्रान्तिरविद्यैव तद्वद् द्वैतविकल्पभ्रान्तिः । द्वैतविकल्पो द्वैतावभासः स चासौ भ्रान्तिश्च । द्वैतं च तद्विकल्पो भ्रान्तिश्च अविद्या अद्वितीयात्माज्ञानविजृम्भितैव तथापि कार्यकर्त्री च भवतीति शेषः । तदुक्तमाचार्यैः—

सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याविद्या वेद्यैः सविभ्रमा ॥

इति । ततः किमित्यत उक्तं—न सत्यमिदमिति । यतोऽविद्यामयम् अत इदं द्वैतं न सत्यम् । असत्यमपि सत्यवद्भासत एव केवलम् । तस्मान्नाद्वितीयताहानिः ॥ २८ ॥

---

सवत्' इत्यादिना । तत्त्वात्—स्वस्वरूपात् । असत्यं वस्तुतो बहिरसत्त्वात् । अविभक्तं तदधिष्ठानेन । अन्यद्—वैधर्म्योपलम्भनात् । तादृशरूपोपग्राहिता तद्रूपप्रकारकज्ञानविशेष्यता । तदाह—स्वप्नविषयेति तद्व्याख्यातारः ।

एतेन तत्तत्प्राणिकर्मवशात् बीजाङ्कुरन्यायेनानादिपूर्वपूर्ववासनयैव सर्पादिभ्रमरूपां घटादिभ्रमरूपां च सृष्टिमीश्वरः करोतीति सूचितम् ।

अत एव 'रज्जौ भुजङ्गो जात'इति न प्रत्ययः किन्तु 'रज्ज्वां भुजङ्गभ्रमो जात'इत्येव।

एवं चानिर्वचनीयभुजङ्गोत्पत्तिः प्रत्याख्याता वेदितव्येति दिक् ।

एतेन अनिर्वचनीयं सदसद्विलक्षणं जलादि मृगतृष्णादावुत्पद्यते एवं ब्रह्मणि प्रपञ्चः मृदादौ घटादि स्वाप्नश्चेति यत्कैश्चिदुक्तं तदपास्तम् ।

तादृशानिर्वचनीयस्याप्रसिद्धेः । किंच तस्य सद्भिन्नत्वादसत्त्वम् असद्भिन्नत्वाच्च सत्त्वमिति द्विरूपतैवायाति तत्र सत्त्वमारोपितमसत्त्वं वास्तवमिति भेदाभेदयोरिव न तयोर्विरोध इति सदसत्ख्यातिवादः सांख्याभिमतः समर्थितो भवतीति ॥

केयमविद्या नाम, कस्य कस्मिन् वाऽसावित्यत्राह—

एतत्तदन्धकारं
यदनात्मन्यात्मता भ्रान्त्या
न विदन्ति वासुदेवं
सर्वात्मानं नरा मूढाः ॥ २९ ॥

---

अथ केयमविद्या कस्य चेत्याह—एतत्तदिति ।

यदनात्मनि देहादौ आत्मता आत्मबुद्धिः एतत्तदन्धकारम् अविद्यैवेत्यर्थः। भ्रान्त्या उपलक्षिता अत एव मूढा सर्वात्मानं वासुदेवं न विदन्ति । एतेन न विदन्त्यनयेति अविद्यापदव्युत्पत्तिः प्रदर्शिता ।

तथा च सनत्सुजातीयभाष्ये—

"उभे सत्ये क्षत्रियाद्यप्रवृत्ते
मोहो मृत्युः संमतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि
सदाप्रमोदामृतत्वं ब्रवीमि ॥

इति पद्ये श्रीभगवत्पादैरप्युक्तं "मोहो मिथ्याज्ञानमनात्मन्यात्माभिमानः। अनेनाग्रहणान्यथाग्रहणात्मिका अविद्या सूचिता" इति। अग्रहणमात्मस्वरूपाज्ञानं तन्मूलकमिथ्याज्ञानात्मिका इत्यर्थः ।

श्लोकार्थस्तु अन्धपदने सनत्सुजातोक्तिः—हे क्षत्रिय ये मृत्योरस्तित्वनास्तित्वं प्रागुक्ते ते उभे आद्यप्रवृत्ते आदिसर्गमारभ्य प्रवृत्ते ।

ननु कथं तयोर्मिथो विरुद्धयोः सत्यत्वमत आह—मोहो मृत्युरिति । भवेद् विरोधस्तयोर्यदि परमार्थरूपो मृत्युः स्यात् किन्तु यो मोहो मिथ्याज्ञानमनात्मन्यात्माभिमानः स मृत्युः केषां चित्कवीनां संमतः अहं ममेति मिथ्याज्ञानस्यापि कारणमात्मानवधारणमात्माज्ञानं मृत्युं जननमरणादिसर्वानर्थबीजमहं ब्रवीमि तथा सदा प्रमोदं स्वाभाविकरूपेणावस्थानममृतत्वं ब्रवीमि इति ।

तदतदन्धकारम् अविद्या यदनात्मनि देहादौ आत्मता, भ्रान्त्या उपलक्षिता अत एव मूढा आत्मतत्त्वजिज्ञासाशून्या नराः सर्वात्मानं सर्वस्य चराचरस्यात्मानं स्वरूपभूतं द्रष्टारञ्च वासुदेवं सर्वात्मत्वेन न विदन्तीति । सदानन्दचिद्घनस्यात्मनः स्वरूपतिरस्करणेना-

---

द्युभ्वाद्यायतनाधिकरणे च "देहादिष्वनात्मसु 'अहमस्मि' इत्यात्मबुद्धिरविद्या" इति शाङ्करभाष्ये उक्तम् ।

तथाध्यासभाष्येऽपि—

"युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतस्तयोरध्यासो मिथ्येति (नास्ति) भवितुं युक्तम्" इत्यनेन मिथ्याभूतेनार्लीकेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं कृत्वा "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्' 'ममेदम्' इति नैसर्गिको लोकव्यवहार" इति सिद्धान्तितम् ।

तस्यैव चाध्यासस्य प्रहाणायाध्यात्मशास्त्रमिति निष्कर्षः । तत्र सत्यं ब्रह्म विशेष्यम् । अनृतमुपाधयो विशेषणम् ।

स्पष्टीकृतं चैतदैतरेयोपनिषदि "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा" इत्यादिना ।

विशेष्यांशस्यैव च नामधेयं भवति नहि घट इति घटत्वस्य नामधेयमिति कोऽप्यभ्युपैति । 'नैसर्गिक' इत्यनेन पूर्वपूर्वभ्रमजन्यः उत्तरोत्तरः संस्कारस्ततश्चोत्तरोत्तरभ्रम इति सूचितम् ।

एतेन भावरूपाऽविद्या भाष्यकृतोऽभिप्रेतेति मतमपास्तम् । इदमेव सूचयितुं 'त' मतमेवंलक्षणमध्यासमविद्येति मन्यते' इत्युक्तं भाष्ये भावरूपायाः कारणाविद्यायाः स्वाभिमतत्वे तु 'अध्यासमपीति' ब्रूयात् ।

संभावितानेकस्वरूपान्तरप्रकाशनशक्तिरविद्येति, प्रकृतिरिति, मायेति, प्रधानमिति, अक्षरमिति, शून्यमिति, चाभिधीयत इत्यर्थः ॥ २९ ॥

किन्तर्हि वासुदेवादन्ये तदज्ञानमोहिता नराः सन्तीति, नेत्याह—

प्राणाद्यनन्तभेदै-

रात्मानं संवितत्य जालमिव ।

---

'तमेतमेवंलक्षणम्'इत्यक्षरस्वारस्येन 'अहं' 'मम' इत्याद्या एवाविद्या । 'वाहं सर्वमि'ति श्रुतौ तस्यैव विरोधित्वात् ।

योगसूत्रेऽपि "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरवि" इति लक्षणमुक्तम् । इति व्याससूत्रेऽपि एतद्विलक्षणस्याऽविद्यालक्षणस्यानु तस्यापीयमेव संमता ।

अत एव "पञ्चवृत्तिर्मनोवद्व्यपदिश्यत' इति सूत्रे परमतमप्रतिषिद्धमनुमतं भवतीति न्यायेन योगशास्त्राभिमताः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपा मनसः ञ्च वृत्तयः परिगृह्यन्ते" इति भाष्ये उक्तम् ।

तस्माद्भ्रमरूपा स्थूलाविद्या वासनारूपा चाव्यक्तपदवाच्या सूक्ष्माविद्या, व्यवहारकाले सा स्थूलाविद्यायाः कारणम् इति तस्या एव 'अव्यक्तं कारणमि' कारणत्वेन निर्देशः ।

सा चेयं जन्या नत्वनादिः अजामेकामित्यादावजत्वोक्तिस्तु एतत्सृष्टौ तन्नाशानुपलम्भात् छागावद्विचित्रसृष्टिजनकतया रूपकेण वा ।

किंच 'तत्तु समन्वयात्' सूत्रे 'साध्यश्चेन्मोक्षोऽभ्युपगम्येत अनित्य एव स्या' तत्रानित्यत्वं नाश्यत्वमेव तव तु अजन्याया अविद्याया नाश्यत्वमिव जन्यस्य मोक्षस्याविनाशित्वे किं बाधकम् जन्यत्वनाश्यत्वयोः परस्परव्याप्तेरेव दर्शनात् एवं चाविद्या जन्या नाश्या चेति सिद्धमित्युक्तमधस्तात् ॥ २९ ॥

किन्तर्हि वासुदेवादन्ये न तद्रा सन्ति नेत्याह—प्राणेति । प्राणोऽन्तर्यामी ।

संहरति वासुदेवः

स्वविभूत्या क्रीड़मान इव ॥ ३० ॥

प्राणोऽन्तर्यामी । आदिपदाद् ब्रह्मादिस्थावरान्ता जीवाः समष्टिव्यष्टिदेहाश्च गृह्यन्ते । वासुदेवः चिदेकरसं ब्रह्म स्वविभूत्या स्वयानन्यगामिन्या विभूत्या स्वातन्त्र्यशक्त्या मायया आक्रीडमान इव "लोकवत्तु लीलाकैवल्यम्" (ब्र०सू० २-१-३३) इति श्रीमच्छारीरकसूत्रोक्तरीत्या स्वाराज्यसमृद्धिमन्तो नरेन्द्रा यथा स्वविभूत्या क्रीडन्ति, तद्वदात्मनात्मन्येव विहर्तुकाम इव प्राणाद्यनन्तभेदैः प्राणाद्यैरनन्तैर्भेदैर्भिन्नाकारैः आत्मानं जालमिव जालकारः संवितत्य सम्यग् विततं व्याप्तं कृत्वा पुनः स्वयमेवात्मविद्यया स्वाविद्यां विधूयात्मन्येव सर्वं संहरति । तदुक्तमाचार्यैः—

"अज्ञानि ब्रह्म बुद्धीरनुसरति ततः स्थावरं जङ्गमं च
स्वाज्ञानादेव भूत्वा क्वचिदवगतितो मुक्तमन्यत्र बद्धम् ।
तच्चाज्ञानं विनष्टं स्थितमथ च तदेवांशभेदोपपत्ते—
रेवं सर्वव्यवस्था परमपुरुषगा जाघटीतीति केचित्" ॥

इति ॥ ३० ॥

---

दिपदेन ब्रह्मादिस्थावरान्ता जीवाः समष्टिव्यष्टिदेहाश्च । संवितत्य दर्शयित्वा स्वविभूत्या वासनाख्यया क्रीडमान इव स्वज्ञानेन स्वाविद्यां विधूय सर्वमात्मन्येव संहरतीति भावः । अन्यथाऽऽत्मनो विकारित्वापत्तिः । भ्रमविपर्येण तु न विकारित्वम् ।

अत एवकामुककृतैः कान्ताविषयैः 'मुग्धा किं नु मृता नु किं मनसि मे लीना विलीना नु किम्' इति विकल्पैः न विकारित्वम् । वस्तुतोऽयं प्रपञ्चः भ्रम एव न कोऽपि पदार्थ इति तदनन्यत्वमिति सूत्रे शाङ्करभाष्ये स्फुटं प्रतिपादितमिति ॥ ३० ॥

आत्मानं संवितत्य संहरतीत्युक्तम् । तत्र कदा केनात्मना क
सृजति संहरति चेत्यत्राह—

त्रिभिरेव विश्वतैजस-
प्राज्ञैस्तैरादिमध्यनिधनाख्यैः ।
जाग्रत्स्वप्नसुषुप्तै-
र्भ्रमभूतैश्छादितं तुर्यम् ॥ ३१ ॥

आदिमध्यनिधनाख्यैः सृष्टिस्थितिसंहारावस्थाख्यैः त्रिभि
र्जाग्रत्स्वप्नसुषुप्तैः जाग्रदादीनाश्रित्य विश्वतैजसप्राज्ञाख्यैस्त्रिभी रूपै
त्मानं संवितत्य संहरतीति पूर्वेण संबन्धः ।

नन्वनन्तचिद्रूपे भगवति भासमाने कथं जाग्रदादयः कालास्तद
विश्वसृष्ट्यादयः तदभिमानिनो विश्वादयश्च भासेरन्नित्यत उक्तं भ्रम
भूतैः मिथ्याभूतैरपि तैरेव तुर्यं भगवतो निजं धाम च्छादितं

आत्मानं संवितत्य संहरतीत्युक्तं तत्र कदा केनात्मना कथं सृजतीत्यत्राह
त्रिभिरेवेति । त्रिभिर्जाग्रत्स्वप्नसुषुप्तैः आदिमध्यनिधनाख्यैः सृष्टिस्थितिसं
रावस्थाख्यैः जाग्रदादीनाश्रित्य भ्रमभूतैर्विश्वादिभिः आत्मानं संवितत्य संहरति
तथा च श्रुतिः—"सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोयमात्मा चतुष्पात् । जाग
रितस्थानो(१)बहिष्प्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पाद

(१) स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिष्प्रज्ञः । सप्त द्युलोकसूर्य
स्वाकाशजलपृथिव्याहवनीया अङ्गानि यस्य सः । बुद्धिन्द्रियाणि कर्मेन्द्रियाणि
च दश, प्राणादयः पञ्च, मनोबुद्धिरहङ्कारश्चित्तमिति चत्वारः, संकलनया एकोनविंशति
मुखान्यस्येति सः । स्थूलाञ्छब्दादीन् भुङ्क्ते स विश्व इत्यर्थः ।

ति। स्वमायाशक्त्यात्मीयं धाम तिरस्कृत्य जाग्रदाद्यवस्थाश्रयणेन वासुदेवो विश्वादिरूपी विश्वसृष्ट्यादिकं करोतीत्यर्थः । भ्रमभूतैरिति जाग्रदादीनां मिथ्याभूतत्वान्न वस्तुतस्तैस्तुर्यं तिरस्कृतं, राहुणेवादित्यः । तत्तिरस्कारे साधकाभावेन स्वासिद्धिप्रसङ्गादिति ।

तदुक्तं तत्त्वविद्भिः ! "अनेन च जगतास्य भगवतः प्रकाशात्मकं

---

(१)स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ।

(२)यत्र सुप्तो न कंचन कामं कामयते न कं चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ।

---

(१) इन्द्रियापेक्षयाऽन्तःस्थत्वान्मनसस्तद्वासनारूपा स्वप्ने प्रज्ञा यस्य स अन्तः प्रज्ञः । विषयस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोज्यत्वम् । इह पुनः केवलावासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोगः । समानमन्यदिति ।

(२) सुषुप्तपदार्थमाह—यत्रेति । नहि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः । स्थानद्वयप्रविभक्तं मनः स्पन्दितं द्वैतजातम् । तथारूपापरित्यागेन विवेकापन्नं नैशतमोग्रस्तमिवाहः सप्रपञ्चमेकीभूतमित्युच्यते । अत एव स्वप्नजाग्रन्मनः स्पन्दनानि प्रज्ञानानि घनीभूतानीव सेयमवस्थाऽविवेकरूपत्वात्प्रज्ञानघन इत्युच्यते । मनसो विषयविषय्याकारस्पन्दनायासदुःखाभावादानन्दमयः आनन्दप्रायो नानन्द एव अनात्यन्तिकत्वात् । अत्यन्तानायासरूपा हीयं स्थितिरनेनानुभूयते इत्यानन्दभुक् । बोधलक्षणं चेतो द्वारं मुखमस्य स्वप्नाद्यागमनं प्रतीति चेतोमुखः । सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते इति ।

रूपं न कदाचित् तिरोधीयते । एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाश मानमिदं जगदात्मनः प्राणभूतं प्रकाशं कथं निरोद्धुं शक्नुयात् । क्वं च तन्निरुद्धं × × × न प्रकाशेते"ति ।

तत्र जाग्रन्नामात्मनोऽज्ञानोपहितस्यान्तर्वहिष्करणतद्विषयज्ञानक्रिय तत्फलव्यवहारेण प्रतिभाससमयः । जाग्रत्प्रपञ्चः सर्वप्रमातृसाधारणो भवति व्यवहारिकसत्ताकत्वात् । तद्द्रष्टात्मा विश्वसंज्ञो भवति ।

वहिष्करणतद्विषयज्ञानादीनि निद्रामुद्रां वहन्त्या स्वाविद्ययैवान्तः करण उपसंहृत्य तद्वासनासहस्रवासितान्तःकरणतद्विषयज्ञानक्रि फलमात्राकारेणात्मनः प्रतिभाससमयः स्वप्नः । स्वाप्नप्रपञ्चस्तु कैकप्रमातृसाधारणो भवति प्रतीतिमात्रसत्ताकत्वाज्जाग्रत्कालीनरज्जु भुजङ्गादिवत् सुखादिवद(न्ति ? नितर) स्थत्वाच्च तद्द्रष्टात्मा तैजसः

अन्तःकरणतद्विषयज्ञानादिकमपि प्रौढया निद्रया त न्मूलाज्ञान उपसंहृत्य जाग्रत्स्वप्नभ्रमसंस्कारसध्रीचीनस्वाविद्यामा शेषविवर्त्तत्वेनात्मनोऽवस्थानसमयः सुषुप्तम् । सौषुप्तज्ञानं च साक्षिमा त्रसंवेद्यविग्रहत्वादान्तरीयत्वाच्चैकैकनिष्ठमेव न सर्वप्रमातृसाधारणम् तद्द्रष्टात्मा प्राज्ञः ।

स्वाविद्यामपि स्वसंविदापास्य सदानन्दचिन्मात्राकारेणात्म नोऽवस्थानसमयस्तुर्यम् । तदप्यात्मानुभवरूपत्वात् सर्वान्तरत्वा च्चैकैकप्रमातृगतं भवेत् । तद्द्रष्टात्मा तुरीय उच्यते ॥ ३१ ॥

तदेवं वासुदेवः स्वयमेवात्ममाययात्मानमजानन्निवात्मनि कञ्चि कालमनन्तचेत्यचेतनप्रपञ्चात्मना तन्नियामकेश्वरात्मना च क्रीडति ।

एव पुनरात्मविद्ययात्माविद्यामपोह्यात्मानं पश्यतीत्याह—

मोहयतीवात्मानं

स्वमायया द्वैतरूपया देवः ।

---

(१)नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति ॥ ३१ ॥

स एव वासुदेवः नियाम्यात्मना नियामकात्मना च क्रीडति पुनरात्मज्ञानेनाविद्यां नाशयित्वात्मानं पश्यतीत्याह—मोहयतीवेति—

द्वैतशब्देन द्वाभ्यां प्रकाराभ्यामितं ज्ञातं द्वीतं तस्य भावो द्वैतमिति व्युत्पत्त्या नामरूपे उच्येते तथा च द्वैतं नामरूपे तदेव स्वरूपं यस्यास्तया स्वमायया आध्यासिकसंबन्धेन नित्यसंबद्धत्वात्स्वभावभूतया ।

---

( १ ) नन्वात्मनश्चतुष्पात्त्वं प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तः प्रज्ञादिभ्योऽन्यत्वे सिद्धे नान्तःप्रज्ञमित्यादि निषेधो व्यर्थ इति चेन्न—सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतीतिवत्त्र्यवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपादयितुमिष्टत्वात् । नान्तः प्रज्ञमिति तैजसप्रतिषेधः । न बहिष्प्रज्ञमिति विश्वप्रतिषेधः । नोभयतः प्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थानिषेधः । न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः । न प्रज्ञमिति युगपत्सर्वविषयप्रज्ञातृत्वनिषेधः । नाप्रज्ञमिति अचैतन्यप्रतिषेधः । अत एवादृष्टम् । यस्माददृष्टं तस्मादव्यवहार्यम् । अग्राह्यं कर्मेन्द्रियैः । अलक्षणमननुमेयम् । अत एवाचिन्त्यम् । अत एवाव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारम्—जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयम् । प्रपञ्चोपशममिति जाग्रदादिस्थानधर्माभाव उक्तः ।

अत एव शान्तम् । शिवं यतोऽद्वैतं भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्त इति श्रुत्यर्थः ।

रूपं न कदाचित् तिरोधीयते। एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रका- मानमिदं जगदात्मनः प्राणभूतं प्रकाशं कथं निरोद्धुं शक्नुयात्। च तन्निरुद्धं × × × न प्रकाशेते"ति ।

तत्र जाग्रन्नामात्मनोऽज्ञानोपहितस्यान्तर्बहिष्करणतद्विषयज्ञानक्रि- तत्फलव्यवहारेण प्रतिभाससमयः । जाग्रत्प्रपञ्चः सर्वप्रमातृसाधार- भवति व्यवहारिकसत्ताकत्वात्। तद्द्रष्टात्मा विश्वसंज्ञो भवति।

बहिष्करणतद्विषयज्ञानादीनि निद्रामुद्रां वहन्त्या स्वाविद्ययैवान्त- करण उपसंहृत्य तद्वासनासहस्रवासितान्तःकरणतद्विषयज्ञानक्रि- फलमात्राकारेणात्मनः प्रतिभाससमयः स्वप्नः । स्वाप्नप्रपञ्च- कैकप्रमातृसाधारणो भवति प्रतीतिमात्रसत्ताकत्वाज्जाग्रत्कालीनरज्जु- भुजङ्गादिवत् सुखादिवद(न्ति ? नितर) स्थत्वाच्च तद्द्रष्टात्मा तैजसः

अन्तःकरणतद्विषयज्ञानादिकमपि प्रौढया निद्रया न्मूलाज्ञान उपसंहृत्य जाग्रत्स्वप्नभ्रमसंस्कारसध्रीचीनस्वाविद्याभ- शेषविवर्तत्वेनात्मनोऽवस्थानसमयः सुषुप्तम्। सौषुप्तज्ञानं च साक्षि- त्रसंवेद्यविग्रहत्वादान्तरीयत्वाच्चैकैकनिष्ठमेव न सर्वप्रमातृसाधारण तद्द्रष्टात्मा प्राज्ञः ।

स्वाविद्यामपि स्वसंविदापास्य सदानन्दचिन्मात्राकारेणात्म- नोऽवस्थानसमयस्तुर्यम् । तदप्यात्मानुभवरूपत्वात् सर्वान्तरत्वा- च्चैकैकप्रमातृगतं भवेत्। तद्द्रष्टात्मा तुरीय उच्यते ॥ ३१ ॥

तदेवं वासुदेवः स्वयमेवात्ममाययात्मानमजानन्निवात्मनि कल्पि- कालमनन्तचेत्यचेतनप्रपञ्चात्मना तन्नियामकेश्वरात्मना च क्रीडति।

एव पुनरात्मविद्ययात्माविद्यामपोह्यात्मानं पश्यतीत्याह—

**मोहयतीवात्मानं**

**स्वमायया द्वैतरूपया देवः ।**

---

(१)नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति ॥ ३१ ॥

स एव वासुदेवः नियाम्यात्मना नियामकात्मना च क्रीडति पुनरात्मज्ञानेनाविद्यां नाशयित्वात्मानं पश्यतीत्याह—मोहयतीवेति—

द्वैतशब्देन द्वाभ्यां प्रकाराभ्यामितं ज्ञातं द्वीतं तस्य भावो द्वैतमिति व्युत्पत्त्या नामरूपे उच्येते तथा च द्वैतं नामरूपे तदेव स्वरूपं यस्यास्तया स्वमायया आध्यासिकसंबन्धेन नित्यसंबद्धत्वात्स्वभावभूतया ।

---

( १ ) नन्वात्मनश्चतुष्पात्त्वं प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तः प्रज्ञादिभ्योऽन्यत्वे सिद्धे नान्तःप्रज्ञमित्यादि निषेधो व्यर्थ इति चेन्न—सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतीतिवत्तदवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपादयितुमिष्टत्वात् । नान्तः प्रज्ञमिति तैजसप्रतिषेधः । न बहिष्प्रज्ञमिति विश्वप्रतिषेधः । नोभयतः प्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थानिषेधः । न प्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः । न प्रज्ञमिति युगपत्सर्वविषयप्रज्ञातृत्वनिषेधः । नाप्रज्ञमिति अचैतन्यप्रतिषेधः । अत एवादृष्टम् । यस्माददृष्टं तस्मादव्यवहार्यम् । अग्राह्यं कर्मेन्द्रियैः । अलक्षणमननुमेयम् । अत एवाचिन्त्यम् । अत एवाव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारम्—जाग्रदादिस्थानेष्वेकोऽयमात्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयम् । प्रपञ्चोपशममिति जाग्रदादिस्थानधर्माभाव उक्तः ।

अत एव शान्तम् । शिवं यतोऽद्वैतं भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्त इति श्रुत्यर्थः ।

उपलभते स्वयमेवं
गुहागतं पुरुषमात्मानम् ॥ ३२ ॥

एवम् उक्तप्रकारेण देवः स्वप्रकाशचिदात्मा भगवान् द्वैतरूपया स्वमाययात्मानं स्वयं मोहयतीव स्वयमेव च पुनः गुहागतं मायातिरस्कृतम् आत्मानं पुरुषं परमात्मानम् उपलभते ॥ ३२ ॥

वासुदेवः स्वमायया विश्वं सृजति पश्यति चेत्युक्तम् । तत्र कुत्र सृजति पश्यति चेत्यत्राह—

ज्वलनाद् धूमोद्गतिभि-
र्विविधाकृतिरम्बरे यथा भाति ।

---

तथा च वक्ष्यति—तद्वत्स्वभावभूता मायैषा कीर्तिता विष्णोरिति ।

आत्मानमुपाध्यवच्छिन्नमात्मानं जीवादिकं मोहो मिथ्याज्ञानं तद्वन्तमिव करोतीत्यर्थः । वास्तवमोहाभावादिवेत्युक्तं तेनारोपित एव मोहः तेन स्वस्वरूपाज्ञानं च सूचितमित्यलम् ॥ ३२ ॥

स्थूणानिखननन्यायेन तदेव द्रढयति–ज्वलनादिति ।

ज्वलनाद्वन्हेर्धूमोद्गतिभिः अम्बरे विविधाकृतिः कृष्णत्वादिरूपा यथा भाति तथा विष्णौ स्वमायया वासनारूपया द्वैतविस्तरा नामप्रपञ्चरूपा सृष्टिर्भातीत्यर्थः । नैतावता विष्णोर्विकारित्वं सृष्टेः काल्पनिकत्वादिति भावः । अत्र भातीत्युक्त्याऽनिर्वचनीयजगदुत्पत्तावस्वरसो दर्शितः । अत एव 'उत्पद्यते' इति नोक्तम् । आकाशे जलरेखावत् शिलायामङ्कुरवत् विविधाकृतेस्तत्र स्वरूपायोग्यत्वेनासंभवात् । अत एव "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इत्यधिकरणे भाष्ये "प्रत्येत्येव हि केवलं शुक्तिकां रजतमिति न तु तत्र रजतमस्तीति" इत्युक्तम् । न च तव दोषस्य

तद्वद् विष्णौ सृष्टिः

स्वमायया द्वैतविस्तरा भाति ॥ ३३ ॥

यथा ज्वलनाद् अग्नेः धूमोद्गतिभिः अम्बरे विविधाकृतिः श्वेतत्वकृष्णत्वादिरूपा भाति, तद्वत् स्वमायया विष्णौ द्वैतविस्तरा द्वैतविस्ताररूपा सृष्टिः सृज्यत इति कार्यपरम्परा भाति । विश्वाश्रयत्वेऽपि तदसंस्पर्शेऽम्बरधूमदृष्टान्तः ॥ ३३ ॥

स्यादेतत् जाग्रदादिद्रष्टात्मा परमेश्वर इति न युक्तं, तस्य सात्त्विकत्वराजसत्वतामसत्वभेदात् परस्य मायोत्तीर्णत्वेन सात्त्विकत्वाद्यसम्भवाच्चेति । तत्राह—

शान्त इव मनसि शान्ते

हृष्टे हृष्ट इव मूढ इव मूढे ।

व्यवहारस्थो न पुनः

परमार्थत ईश्वरो भवति ॥ ३४ ॥

व्यवहारस्थो जीवभावं गत ईश्वरो मनसि शान्ते सात्त्विके शान्तः सात्त्विक इव भवति हृष्टे राजसे हृष्टो राजस इव मूढे तामसे मूढः तामसः इव न पुनः परमार्थतः, गुणानां दृश्यत्वेन दृक्सम्बन्धासम्भवादित्यर्थः ॥ ३४ ॥

---

रजतज्ञानत्वं कार्यतावच्छेदकं मम तु रजतत्वमिति लाघवमिति वाच्यम् उत्पत्तिनानाकल्पनापेक्षया प्रमास्थले क्लृप्तस्य तस्यैव तथात्वौचित्यादिति ॥ ३३ ॥

काल्पनिकैरेभिः परमेश्वरस्य न वास्तवः सम्बन्धो न वा तेन तस्य विकारि-

ननु सुखदुःखमोहानामनुभवितुरात्मनस्तैः कारणैर्गुणैः सम्बन्धे भाव्यमित्यत्राह—

जलधरधूमोद्गतिभि-
मलिनीक्रियते यथा न गगनतलम् ।
तद्वत् प्रकृतिविकारै-
रपरामृष्टः परः पुरुषः ॥ ३५ ॥

यथा जलधरधूमोद्गतिभिः जलधरधूमयोरुद्गतिभिरुदयैः गगन तलं न मलिनीक्रियते असङ्गस्वभावत्वात् तद्वत् प्रकृतिविकारैः सुखदुःखमोहैस्तत्र प्रतीयमानैरपि अपरामृष्टः पुरुषो जीवभावं गतः प रः परमात्मा, निरञ्जनत्वादित्यर्थः ॥ ३५ ॥

ननु सर्वक्षेत्रेष्वेक एव चेत् क्षेत्रज्ञस्तर्ह्येकस्मिन्नज्ञेऽन्येऽप्यज्ञाः स एकस्मिन् दुःखिनि सर्वेऽपि दुःखिनः स्युरित्यत्राह—

एकस्मिन्नपि च घटे
धूमादिमलावृते शेषाः ।
न भवन्ति मलोपेता
यद्वज्जीवोऽपि तद्वदिह ॥ ३६ ॥

---

स्वमित्याह—द्वाभ्याम्—शान्त इत्यादि । स्पष्टम् ॥ ३४ ॥ ३१ ॥

ननु यदि सर्वशरीरेषु एक एव क्षेत्रज्ञस्तर्ह्येकस्मिन्दुःखिनि सर्वे दुःखिनः स्यु रित्यत्राह—एकस्मिन्नपीति । घटे—घटाकाशे । क्वचित्तु 'एकस्मिन्नप

इहैकस्मिन् घटे घटाकाशे धूमादिमलावृतेऽपि शेषाश्च मलोपेता न भवन्ति यद्वत् तद्वद् एकस्मिन् जीवेऽज्ञानाद्यावृतेऽप्यपरो जीवोऽनावृतो भवतीत्यर्थः ॥ ३६ ॥

एवं जीवगतौ धर्माधर्मौ (व्यव) हरता गुरुणा परमात्मापि वितत्य निरूपितः । अथ 'गुणपुरुषविभागज्ञे धर्माधर्मौ कथं बन्धकौ न भवत' इति प्रश्नो दशभिः 'देहेन्द्रियेष्वि'त्यादिभिरार्याभिः परिह्रियते—

देहेन्द्रियेषु नियताः
कर्म गुणाः कुर्वते स्वभोगार्थम् ।
नाहं कर्त्ता न ममेति
जानतः कर्म नैव बध्नाति ॥ ३७ ॥

देहेन्द्रियेषु देहश्चेन्द्रियाणि च तेषु नियता व्याप्ता गुणाः कार्यकरणसङ्घातात्मना परिणता प्रकृतिः स्वभोगार्थं कर्म कुर्वते, नाहं कर्ता ततो विलक्षणाकारत्वात्, न च मम तद्भोग्यफलं भवति इति जनतो जानानान् कर्म नैव बध्नाति देहान्तरेण योजयति । येयमात्मनः कार्यकरणसङ्घातात्मिका जडा प्रकृतिस्तदनुप्रवेशाद्वा प्राप्तस्वातन्त्र्या, सैव यत्किञ्चिदैहिकमामुत्रिकं वा फलमिच्छन्ती शुभमशुभं वा कर्म करो-

---

इति पाठः । शेषाः—अन्ये । एवं च एकस्मिन्नज्ञानावृतेऽपि नान्येऽज्ञानावृता भवन्तीत्यर्थः ॥ ३६ ॥

ननु बन्धनिवर्तकं तत्त्वज्ञानं किमित्याह—देहेन्द्रियेष्विति । देहेन्द्रियव्याप्ता गुणाः स्वभोगार्थं कर्म कुर्वते नत्वहमिति न वा तत्कर्मफलं मम इति जानतः पुंसः

ति । तेनेह परत्र वा तत्फलमपि सैवानुभवति । आत्मा तु तत्तादात्म्याध्यासात् कर्तेव भोक्तेव च भासते 'ध्यायतीव लेलायतीव (बृ० ४-३-७) इति श्रुतेः । अत एवं जानतः पुंसो न कर्मतत्फलसम्बन्ध इत्यर्थः ॥ ३७ ॥

ननु देहसम्बन्धस्य कर्मनिमित्तत्वेऽन्योन्याश्रयः देहे सति कर्म तस्मिन् सति देह इति तत्राह—

अन्यशरीरेण कृतं
कर्म भवेद् येन देह उत्पन्नः ।
तदवश्यं भोक्तव्यं
भोगादेव क्षयोऽस्य निर्दिष्टः ॥ ३८ ॥

येन देह उत्पन्नः तत् कर्म अन्यशरीरेण ततः प्राचीनेन कृतं भवेत् । तदारम्भकं कर्म ततः प्राचीनेन देहेन एवं तत्तत् कर्मेति नान्योन्याश्रयः । न चात्रानवस्थादोषः संसारस्यानादित्वेन मूलक्षयकरत्वाभावात् । तदुक्तं भट्टपादैः—

"मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्" इति ।

ननु प्राचीनदेहकृतस्य कर्मणः फलमनेन देहेन भुज्यत इति कुतो निर्णीतमित्यत्राह—तत् शुभमशुभं वा कर्म अवश्यं भोक्तव्यं यतः

---

कर्मबन्धकं न भवतीत्यर्थः ॥ ३७ ॥

ननु देहसम्बन्धो यदि कर्मनिमित्तस्तदा सति देहे कर्म कर्मणि च सति दे[illegible] इत्यन्योन्याश्रय इत्याह—अन्येति । अयं भावः संसारप्रवाहस्यानादित्वेन पूर्व[illegible]

अस्य भोगादेव क्षयो निर्दिष्टः शास्त्रेषु—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमनुभोक्तव्यं कृत कर्म शुभाशुभम् ॥

इति ॥ ३८ ॥

एवं चेद् विद्वद्भिरपि प्राचीनं कर्मोपभोक्तव्यमित्यनिर्मोक्षः । तत्राह—

प्राग्ज्ञानोत्पत्ति चितं
यत् कर्म ज्ञानाशिखिशिखालीढम् ।
बीजमिव दहनदग्धं
जन्मसमर्थं न तद् भवति ॥ ३९ ॥

प्राग्ज्ञानोत्पत्ति ज्ञानोत्पत्तेः पूर्वं यत् कर्मचितम् अनुष्ठितं तद् यतो ज्ञानशिखिशिखालीढं तन्मूलाज्ञानसंहारद्वारेण संहृतम् अतो जन्मसमर्थं पुनर्जन्मसम्पादने शक्तं न भवति दहनदग्धं बीजमिव तदुक्तं भगवता----

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" । (गी० ४-३७)

इति ॥ ३९ ॥

तथापि ज्ञानोदयादूर्ध्वमादेहपातं क्रियमाणं कर्म विदुषो देहा-

---

रीरे कृतं कर्म देहान्तरे भुज्यते तस्मिंश्च कृतं देहान्तर इति नान्योन्याश्रय इति॥३८॥

नन्वेवं तर्हि ज्ञानिभिरपि देहान्तरे कर्म भोक्तव्यं स्यान्नेत्याह—प्रागिति । ज्ञानाग्निदग्धं कर्म देहान्तरोत्पादनसमर्थं न भवतीति भावः ॥ ३९ ॥

न्तरमुत्पादयतीत्यत्राह—

ज्ञानोत्पत्तेरूर्ध्वं
क्रियमाणं कर्म यत् तदपि नाम ।
न श्लिष्यति कर्त्तारं
पुष्करपत्रं यथा वारि ॥ ४० ॥

यद् ज्ञानोत्पत्तेरूर्ध्वम् आदेहपातं क्रियमाणं कर्म तदपि कर्ता न श्लिष्यति न स्पृशति, यथा पुष्करपत्रं पद्मपत्रं तत्स्थं वारि न श्लिष्यति तथेत्यर्थः । श्रुतिश्च "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" (छा० ४-१४-३) इति । संसार-दुःखजनकत्वाविशेषाच्छ्रुतौ पापशब्देन शुभाशुभं कर्म गृहीतम् ॥४०॥

कुतो न श्लिष्यति कर्तृत्वाभिमानाभावादित्याह—

वाग्देहमानसैरिह
कर्मचयः क्रियत इति बुधाः प्राहुः ।
एकोऽपि नाहमेषां
कर्त्ता तत्कर्मणां नास्मि ॥ ४१ ॥

---

एवं ज्ञानोत्पत्तेरूर्ध्वं क्रियमाणमपि कर्म न देहान्तरसम्बन्धापादकमित्याह ज्ञानेति । कर्तृत्वाभिमानशून्यस्य पुंसस्तदानीमुत्पन्नकर्मणा सम्बन्धासम्भव[illegible] मूलम् । 'नाभुक्तं क्षीयते' इति वचनं तु प्रारब्धकर्माभिप्रायं द्रष्टव्यं तस्य भोगं[illegible] नाशादिति ॥ ४० ॥

कुतो न कर्म श्लिष्यति कर्तृत्वाभिमानाभावादित्याह—वाग्देहेत्यादि [illegible]

कर्मफलबीजनाशा-

ज्जन्मविनाशो न चात्र सन्देहः ॥

बुद्ध्वैवमपगततमाः

सवितेवाभाति भारूपः ॥ ४२ ॥

इह देहिषु मध्ये बुधा वाग्देहमानसैः कर्मचयः क्रियत इति प्राहुः । न च अहम् एषां मध्य एकः तत्कमर्णां कर्तापि नास्मि । कर्मफलबीजनाशात् कर्मफलस्य बीजं कर्तृत्वं तस्य नाशादभावाद् जन्मविनाशः पुनर्जन्माभावः । अत्र च न सन्देहः । एवं बुद्ध्वा सवितेवापगततमा अपगतमोहः पुमान् भारूपो नित्योदितानस्तमित-प्रकाशात्मा आभाति सर्वोपरिस्थित् प्रकाशते ॥ ४१ ॥ ४२ ॥

किं ज्ञानोदयसमकालमेव कर्माणि नश्यन्ति किं वा कालान्तर इति तदैवेत्याह—

यद्वद्दीपीकातूलं

पवनोद्धूतं हि दश दिशो याति ॥

ब्रह्मणि तत्त्वज्ञानात्

तथैव कर्माणि तत्त्वविदः ॥ ४३ ॥

---

द्वयेन । कर्मफलस्य बीजं कर्तृत्वाभिमानस्तस्य नाशात्पुनर्जन्म न भवति । अत्र संदेहो नास्ति । स्वस्वरूपं बुद्ध्वा प्रकाशरूपः सविता इव पुनराभातीत्यर्थः॥४१॥४२॥

इषीका काशस्तस्यां परिणतायां स्थितं तूलम् इषीकातूलम् तत् पवनोद्धूतं दश दिशो याति यद्वत् तथा तत्त्वविदः कर्माणि तत्त्वज्ञानादेव ब्रह्माणि यान्ति लीयन्ते ॥ ४३ ॥

किं तर्हि विदुषो देहः सद्यः पतति किं वा कालान्तरे । आद्ये पक्षे तत्त्वज्ञस्य गुरोरभावाद् ब्रह्मविद्या सम्प्रदायविच्छेदः । द्वितीये विदुषोऽपि देहाभिमानादनर्थप्राप्तिरित्याशङ्कायां प्रारब्धकर्मवशात् कञ्चित् कालं तद्देहस्तिष्ठति तदारम्भकस्य कर्मणस्तत्त्वज्ञानेनाविनष्टत्वात् तद्विनाशे उपजीव्यविरोधप्रसङ्गान्मुक्तेपुवत् प्रारब्धफलस्य कर्मणः फलभोगेन विना क्षयायोगाच्च । तथापि नास्य प्राग्वद् देहाद्यात्मभ्रान्तिः स्याद् ब्रह्मभावं गतत्वादित्याह—

क्षीरादुद्धृतमाज्यं
क्षिप्तं यद्वन्न पूर्ववत् तस्मिन् ।
प्रकृतिगुणेभ्यस्तद्वत्
पृथक्कृतश्चेतनो नात्मा ॥ ४४ ॥

क्षीरादुद्धृतमाज्यं तस्मिन् पुनः क्षिप्तं पूर्ववत् क्षीरवत् न भवति यद्वत् तद्वत् प्रकृतिगुणेभ्यः प्रकृतेर्गुणेभ्यः कार्येभ्यो देहादिभ्यः पृथक्कृतः श्रुतियुक्तिभ्यामन्यत्वेन निश्चितः चेतनो जीव आत्मा परमात्मा सन् पुनः प्रकृतिगुणेषु कर्मशेषात्स्थितोऽपि पूर्ववन्न भवति, देहाद्यात्मभ्रान्तिं न यातीत्यर्थः ॥ ४४ ॥

परमात्मभावं गतश्चेतनः कथं भवतीत्यत्राह—

गुणमयमायागहनं
निर्धूय यथा तमः सहस्रांशुः ।
बाह्याभ्यन्तरचारी
सैन्धवघनवद् भवेत् पुरुषः ॥ ४५ ॥

यथा सहस्रांशुः सूर्यः तमो निर्धुनोति, तथा पुरुषो विद्वान् गुणमयमायागहनं कार्यकरणसङ्घातरूपं मायासंज्ञं तमो निर्धूय निःशेषं संहृत्यानात्मत्वेन परित्यज्य बाह्याभ्यन्तरचारी देहाद्यवच्छिन्नत्वेऽपि तदनवच्छिन्नत्वेन वर्तमानः सैन्धवघनवत् चिदेकरस एव भवेत् । अन्तर्बहिश्च लवणमेव हि तत् । एवमात्मापि अन्तर्बहिश्च चिदेकरस एवावतिष्ठत इत्यर्थः । श्रुतिश्च—"तद्यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृ० ४—५—१३ ) इति ॥ ४५ ॥

यद्यात्मा मायातत्कार्येभ्योऽन्यः, तर्हि तेषां ततः पृथक्सत्त्वादद्वितीत्वहानिरित्यत्राह—

यद्वद्देहोऽवयवा
मृदेव तस्या विकारजातानि ।

---

यद्यात्मा मायातत्कार्येभ्यश्चान्यस्तदा तस्याद्वितीयताहानिरित्याह—यद्वदिति । अवयवातिरिक्तोऽवयवी यथाऽसन् । मृद्विकाराश्च यथाऽसन्तो भान्ति । द्वाभ्यांप्रका-

तद्वत् स्थावरजङ्गम-

मद्वैतं द्वैतवद् भाति ॥ ४६ ॥

यद्वद् अवयवाः शिरःपाणिपादादयो देह एव, न ततः पृथक् सन्ति, तथापि देहः तेभ्योऽन्यः, अन्यथा तस्यावयवित्वायोगात्। यद्वच्च मृदेव तस्या विकारजातानि घटशरावमृदङ्गादीनि, न ततोऽन्यानि, तथापि तेभ्यो मृदन्यैव, नो चेत् कारणत्वानुपपत्तेः । तद्वत् स्थावरं जङ्गमं च जगद् अद्वैतं सदानन्दचिदेकरसं ब्रह्मैव सद् द्वैतवत् ततोन्यदेव भाति अन्यत्वेन भासत एव केवलम्, वस्तुतस्तु तदेव। तथापि जगतोऽन्यदेव तद्, अन्यथा मूलकारणत्वानुपपत्तेः । श्रुतिश्च—

विश्वं नारायणं देवमक्षरं परमं पदम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥

( महानारायण ११—१ )

इति । तेन नाद्वितीयताहानिशङ्कापीत्यर्थः । 'कोशकार इव कर्मगुणजालबद्धो यः संसरति स जीवः क' इति यस्त्वं पदार्थविषयप्रश्नः, यश्च 'प्रकृतिं पुरुषं च मे ब्रूहि' इति तत्पदार्थविषयः, यश्च 'गुणपुरुषविभागज्ञे धर्माधर्मौ कथं बन्धकौ न भवत' इति फलविषयः एवं (पामे) कचत्वारिंशदार्या भवन्ति ॥ ४६ ॥

---

राभ्यामितं ज्ञातं द्वीतं तस्य भावो द्वैतं नामरूपे तद्रहितं अद्वैतम् द्वैतवद् नामरूपवत्त्वमसदेव भातीत्यर्थः । तथाच श्रुतिः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति ॥ ४६ ॥

'यद्वद् दिनकर एको विभाति सलिलाशयेषु सर्वेषु। तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा' इति यत् पूर्वमुक्तं तदेवानुवदन् वाक्यार्थसंभूतं जीवपरैक्यं तावदाह—

एकस्मात् क्षेत्रज्ञाद्
बह्व्यः क्षेत्रज्ञजातयो जाताः।
लोहगतादिव दहनात्
समन्ततो विष्फुलिङ्गगणाः॥ ४७॥

लोहगताद् दहनात् समन्ततो विस्फुलिङ्गगणा इवैकस्मात् क्षेत्रज्ञाद् बहवः सुरनरपशुपक्षिजलजन्तुसरीसृपस्थावरभेदेन तत्राप्येकैकत्र बहुधा भेदेन चतुरशीतिलक्षसङ्ख्या क्षेत्रज्ञजातयो जाताः। यथोक्तं श्रुत्या 'यथाग्नेर्विस्फुलिङ्गा व्युच्चरन्ति एवमेव तस्मादात्मन एत आत्मानो व्युच्चरन्ति (बृ० २—१—२०) इति क्षेत्रज्ञजातिभेदाश्च सद्भिरुपदिश्यन्ते—

त्रिदशा मनुजाश्चैव जलजा विहगा मृगाः।
सरीसृपाः स्थावराश्च सप्तैते जन्महेतवः॥
त्रिदशा षोडशलक्षाणि नव लक्षणानि मानुषाः।

---

"यद्वद्दिनकर एक" इत्यार्यया प्रतिपादितं 'तत्त्वमसि' इत्यादि श्रुतिसिद्धं जीवपरैक्यं तावदाह—एकस्मादिति। ननु 'क्षेत्रज्ञजातयो जाता' इत्यनुपपन्नं—

जीवेशौ च विशुद्धा चिद्विभागश्च तयोर्द्वयोः।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥

दशभिर्दशभिश्चैव जलजा विहगा मृगाः
सरीसृपा एकादशाष्टादश स्थावरा स्मृताः ।

इति सर्वक्षेत्रेष्ववस्थिता ये क्षेत्रज्ञाः त एकः परमात्मापरपर्याय प्रधानः क्षेत्रज्ञ एवेति जीवपरैक्यलक्षणो वाक्यार्थोऽनेन श्लोकेन च दर्शितः ॥ ४७ ॥

एवं चेत् कुत एषां बन्धः कुतो वा तन्निवृत्तिरित्यत्राह—

ते गुणसङ्गमदोषाद्
बद्धा इव धान्यजातयः स्वतुषैः ।
जन्म लभन्ते तावद्
यावन्न ज्ञानवह्निना दग्धाः ॥ ४८ ॥

तन्त्रेण वावृत्त्या वात्रेवशब्द उभयत्र सम्बध्यते । क्षेत्रज्ञाः स्वतं मुक्ता अपि गुणसङ्गमदोषात् गुणाः क्षेत्राणि तैः सङ्गमाद् बद्ध इव न परमार्थतो बद्धाः औपाधिकस्य स्फटिकलौहित्यादिवत् पारमार्थिकत्वानुपपत्तेः "विमुक्तश्च विमुच्यते" (कठ० २—५—१) इति तेश्च । धान्यजातयः स्वतुषैरिव बन्धहेतोः क्षेत्रस्य स्वोद्भवत्वे तत्त तस्तदसंस्पृष्टत्वे तत्त्वविचारेण ( परं ) हर्तुं शक्यत्वेऽनकत्वे च दृ

---

इत्यभियुक्तोक्तेः क्षेत्रज्ञानां जीवानामनादित्वादिति चेन्न जीवानामुपाधिवै... ष्टयेन प्रकृते जन्यत्वोक्तेरदोषात् । क्षेत्रोत्पत्तिरेव च क्षेत्रज्ञानामुत्पत्तिरिति तदा... एवमेव स्मृतावपि 'प्रधानपुंसोरजयोः कारणं कार्यभूतयोरि'त्युक्तं संगच्छते । जीव... नित्यत्वोक्तिस्तु विशेष्यांशमादायेति निवेदितमधस्तात् ॥ ४७ ॥

न्तः । एवञ्च यावद् ज्ञानाग्निना जीवेश्वरैक्यसाक्षाज्ज्ञानाग्निना नेद्धाः संहृतक्षेत्राभिमानाः तावद् जन्म लभन्ते धान्यजातयोऽपि यावद्वह्निदाहं पुनर्जन्म लभन्ते ॥ ४८ ॥

ननु ज्ञानमज्ञानस्यैव निवर्त्तकम् । तत् कथं बन्धस्यानेन निवृत्तिरित्याशङ्क्य तस्याज्ञानमयत्वमाह—

त्रिगुणा चैतन्यात्मनि
सर्वगतेऽत्रास्थितेऽखिलाधारे ।
कुरुते सृष्टिमविद्या
सर्वत्र स्पृश्यते तया नात्मा ॥ ४९ ॥

त्रिगुणाः त्रयः सत्त्वरजस्तमोलक्षणा गुणाः अवयवा यस्याः सा अविद्या चैतन्यात्मनि बोधस्वरूप आत्मनि सर्वत्र सर्वदा सृष्टिं सृज्यते इति सृष्टिं क्षेत्रलक्षणानि कार्याणि कुरुते । इहाविद्याया भगवतः स्वरूपाच्छादनशक्तिस्तमः, रूपान्तरसम्पादनशक्ती रजः, तत्प्रकाशनशक्तिः सत्त्वमि,ति भेदः । यथाहुः—

"सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते ।"

इति ।

---

ननु 'सत्यं भावं न विसिर्व्यपनुदति यतः कर्मनाश्यो घटादिर्मिथ्याभूतं च कर्म क्षपयति न तथा वित्तिघात्यं यतस्तत्' इति नयेनाज्ञाननिवर्त्यत्वस्य मिथ्याभूते वस्तुन्येवावगमात् सत्यस्य बन्धस्य कथं ज्ञाननिवर्त्यत्वमित्याशङ्कामुन्मूलयितुं बन्धस्याविद्यायाश्च आध्यासिकसम्बन्धेन परमात्मैविषयकत्वमुपपादयति—त्रिगुणेति ।

किं देहादिपरिच्छिन्न आत्मनि सृजति नेत्याह—सर्वगत इति। देहादेरनुत्पन्नत्वात् तदनवच्छिन्न इत्यर्थः । तथापि किं क्षणिकवि- ज्ञानसन्तानरूपे नेत्याह—अवस्थित इति । स्थिरस्वभाव इत्यर्थः । आ- त्मनः क्षणिकविज्ञानरूपत्वे पूर्वानुभूतार्थस्मरणानुपत्तेः स्थिरत्वमास्थेयमि- त्याशयः । श्रुतिश्च "आकाशवत् सर्वगतश्च नित्य" इति । तत्रैव सृजती- त्यत्र हेतुः—अखिलाधार इति । अखिलस्याधारे द्रष्टरीत्यर्थः । तदुक्तं भगवता—

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" ॥ (गी १३-३३

इति ।

ननु प्रकाशात्मनि भगवति कथमप्रकाशात्मिकाविद्या सम्भवतीत्यत उक्तं तयात्मा न स्पृश्यत इति । यथा राहुः सवितरि प्रकाशमानो- ऽपि तं न स्पृशति तथाविद्यात्मनि प्रकाशमानापि तं न स्पृशती- त्यर्थः । तदुक्तं बृहद्वार्त्तिके—

"अविद्यास्येत्यविद्यायामेवासित्वा प्रकल्पते ।
ब्रह्मद्वारा त्वविद्येयं न कथञ्चन युज्यते ॥

इति ॥ ४९ ॥

---

वाश्रयः शाङ्करमतानुयायिनोऽतिरिक्ताविद्याया इव । भ्रमाधिष्ठानत्वमेव तद्विषय- त्वरूपविवर्तोपादानत्वमिति बोध्यम् । अविद्या च सूक्ष्मा संस्काररूपा मायाख्य- स्थूलाविद्यायाः कारणमिति निष्कर्षः ॥ ४९ ॥

अविद्यया न स्पृश्यते चेत् कथं सकार्यायास्तस्यास्तस्मिन् प्रतीतिरित्याशङ्क्योक्तमर्थं दृष्टान्तेन साधयति—

रज्ज्वां भुजङ्गहेतुः
प्रभवविनाशौ यथा न स्तः ।
जगदुत्पत्तिविनाशौ
न च कारणमस्ति तद्वदिह ॥ ५० ॥

यथा रज्ज्वां भुजङ्गहेतुः तस्य प्रभवविनाशौ च न स्तः, तद्वदिह आत्मनि जगदुत्पत्तिविनाशौ न स्तः न च तत्कारणमस्ति । अयमर्थः—यथा रज्जुव्यतिरेकेण तत्र सर्पस्य तत्कारणस्य चाभावेऽपि तस्मिन् सर्पभ्रान्तिः एवमात्मव्यतिरेकेण जगतस्तत्कारणस्य चाभावेऽपि तस्मिन् जगद्भ्रान्तिरिति ॥ ५० ॥

ततः फलितमर्थमाह—

जन्मविनाशनगमना-
गममलसम्बन्धवर्जितो नित्यं ।

---

रज्ज्वामिति । रज्ज्वां भुजङ्गहेतुः भुजङ्गारम्भकपरमाणुर्नास्ति नच तत्र भुजङ्गस्य उत्पत्तिर्विनाशो वा भवतीति तथापि सर्पभानं भवति तद्वत् ब्रह्मणि जगतोऽपि उत्पत्त्याद्यभावेऽपि भानं बोध्यमित्यर्थः । अनेनानिर्वचनीयसर्पोत्पत्तिवादः स्फुटं निरस्तः सामान्यत उत्पत्तेर्निषेधश्रवणात् ॥ ५० ॥

आकाश इव घटादिषु
सर्वात्मा सर्वदोपेतः ॥ ५१ ॥

सर्वात्मा सर्वेषामात्मा नित्यं जन्मविनाशनगमनागममलसम्बन्धवार्जितः जन्मविनाशौ गमनागमौ मलानि चाविद्यादीनि तैः सम्बन्धेन वर्जितो हीनः तथापि घटादिषु आकाश इव सर्वदा सर्वत्र उपेतो व्याप्त इति ॥ ५१ ॥

तर्हि बन्धमोक्षार्थः प्रयासोऽनर्थक इत्यत्राह—

कर्मशुभाशुभफलसुख-
दुःखैर्योगो भवत्युपाधीनाम् ।
तत्संसर्गाद् बन्ध-
स्तस्करसङ्गादतस्करवत् ॥ ५२ ॥

यदुपाधीनां कर्म, यश्च शुभाशुभजनितैः सुखदुःखैः सम्बन्धः तत् कर्म सम्बन्धश्च तत्संसर्गाद् उपाधिभिः सह तादात्म्याध्यासादात्मनो भवति, तस्करसङ्गादतस्करवद् यथा अतस्करस्य तस्करसङ्गाच्चौर्यं बन्धश्च भवेत् तथेत्यर्थः ॥ ५२ ॥

उपाधीनेवाविष्कुर्वन्नुक्तमर्थं विशदयति—

देहगुणकरणगोचर-
सङ्घात् पुरुषस्य यावदिह भावः ।

तावन्मायापाशैः

संसारे बद्ध इव भाति ॥ ५२ ॥

देहशब्देन तदात्मना परिणतान्यव्यक्तमहदहङ्कृतिभूतान्युच्यन्ते गुणा बुद्धिसुखदुःखेच्छाप्रयत्नादयः, करणानीन्द्रियाणि गोचरा ज्ञेयाः कार्याश्च शब्दादयो विषयाः, तैः सञ्जात् पुरुषस्य यावदिह भाव आत्मत्वाभिमानः तावन्मायापाशैः संसारे गर्भाधिवासादिदुःखे बद्ध इव रुद्ध इव भाति । 'देहगुणकरणगोचरे'ति क्षेत्रस्वरूपमुक्तम् ।

यथाह भगवान्—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ (गी० १३-५-६)

इति ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तम् (क० १-३-१०-११)

इति श्रुत्या चैतदेव गृहीतम् ॥ ५२ ॥

बन्धस्वरूपमाह—

मातृपितृपुत्रबान्धव-

धनभोगविभागसम्मूढः ।

जन्मजरामरणमये
चक्र इव भ्राम्यते जन्तुः ॥ ५४ ॥

जन्तुः जीवो जन्मजरामरणमये संसारे चक्रे इव कुलालचक्रे तत्स्थः पिपीलिकादिरिव भ्राम्यते भ्राम्यति । कथम्भूतः मातृपितृपुत्रबान्धवधनभोगविभागसम्मूढः माता च पिता च पुत्रश्च बान्धवाश्च धनञ्च भुज्यन्ते इति भोगाश्चन्दनवनितादयश्च तेषां विभागः पृथक् पृथगवभासः 'ममेयं माता' 'अयं मे पिता' 'अयं पुत्र' 'इमे बान्धवा' 'इदं धनम्' 'इमे भोगा' इत्यादिरूपः तेन सम्मूढो भ्रान्तः ॥ ५४ ॥

कुतो हेतुर्भ्राम्यतीति कर्मवशादित्याह—

लोकव्यवहारकृतां
य इहाविद्यामुपासते मूढाः ।
ते जननमरणधर्माणो-
ऽन्धं तम एत्य खिद्यन्ते ॥ ५५ ॥

लोक्यत इति लोकः कार्य्यकरणसंघातः तत्रस्थो व्यवहार आत्मस्वाभिमानः तेन कृताम् अविद्याम् कर्म य उपासते कुर्वन्ति ते मूढाः पुनरपि अन्धं तमः अविद्यामयं देहान्तरमभ्येत्य जननमरणधर्माणो जननमरणादिधर्माश्रयाः खिद्यन्ते दुःखमनुभवन्ति । श्रुतिश्चः । "अन्धं तमः प्रविशन्ति येऽविद्यामुपासत" (बृ० ४—४—१०) इति ॥ ५५ ॥

कुतः सम्भूतेयमप्रकाशात्मिका माया प्रकाशात्मनि भगवतीति

स्वस्मादेवेत्याह—

हिमफेनबुद्बुदा इव
जलस्य धूमो यथा वह्नेः ।
तद्वत् स्वभावभूता
मायैषा कीर्तिता विष्णोः ॥ ५६ ॥

एषा संसारहेतुः माया विष्णोः सर्वात्मनः स्वभावभूता स्वोऽसाधारणो भावः सत्ता स्वभावः तस्मात् सम्भूता निसर्गसिद्धा सद्भिः कीर्तिता "मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार" इति । जलस्य हिमफेनबुद्बुदा इव यथा वह्नेः धूमः तद्वच्च । निर्मलद्रवात्मकाज्जलात् कठिनं श्वेतवर्णं च हिमादि यथोत्पद्यते यथा च प्रकाशवपुषो वह्नेरप्रकाशरूपो धूमः तथा प्रकाशात्मनः परमेश्वरादप्रकाशरूपिणी मायोदेति । नो खलु निवर्त्येन तमसा विना प्रकाशस्य प्रकाशता सिध्यतीति ।

यद्वा स्वमायाशक्तिमवलम्ब्य परमेश्वरो महदादिक्रमेणाण्डं तदन्तश्चतुर्दशभुवनानि, तत्र चराचरशरीराणि, च सृष्ट्वा तत्र तत्रान्तर्यामित्वेन जीवत्वेन च प्रविश्य विश्वनियमनं स्वनियमानतिक्रमेण सुखदुःखाऽनुभवञ्च किमुद्दिश्य करोतीत्यत्राह—हिमेति । यथा जलाद्धिमफेनाद-

---

नन्वप्रकाशात्मिकेयं माया प्रकाशस्वरूपे ब्रह्मणि कथं संभवतीत्याह—हिमेति । जलादेः फेनजनकत्वस्वभाववत् विष्णोः स्वभावभूता तज्जननस्वभावत्वात्तस्य ।

स्तथा परिणमनस्वभावत्वादेव जायन्ते न प्रयोजनविशेषान्निमित्ताद् यथा च वह्नेर्धूमः, तथा कार्यकारणात्मिका माया परमेश्वरात् स्वत एवाविर्भवति, न किमपि प्रयोजनमुद्दिश्य, तस्याप्तकामत्वेन कस्मिंश्चिदिच्छासम्भवादित्यर्थः । श्रुतिश्च—

भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ (गौ०का०१-९

इति अस्मिन् पक्षे मायाशब्देन तन्मयी विश्वसृष्ट्यादिका विभोः प्रवृत्तिर्गृह्यते ॥ ५६ ॥

एवं बन्धस्याविद्यकत्वेन विद्यापोह्यत्वं साधितम् , अथ विद्योदयोपायं तस्याः स्वरूपम् , तत्फलभूताया जीवन्मुक्तेः स्वरूपञ्च क्रमेणैकोनविंशत्यार्याभिरुपदिश्यते । तत्रोपायं तावदाह—

एवं द्वैतविकल्पां
भ्रमस्वरूपां विमोहनीं मायाम् ।
उत्सृज्य सकलनिष्कल-
मद्वैतं भावयेद् ब्रह्म ॥ ५७ ॥

एवम् उक्तप्रकारेण द्वैतविकल्पां द्वैतं विकल्पयति भासयतीति द्वैतविकल्पा ताम् अद्वैते द्वैतत्वस्यासम्भावितत्वाद् भ्रमस्वरूपाम्

---

मायाया विष्णौ वास्तवसम्बन्धाभावेऽपि आध्यासिकसम्बन्धेन तस्या विष्णौ निःसम्बद्धत्वाच्चतत्स्वभावत्वारोप इति ध्येयम् ॥ ५६ ॥

विद्योदयोपायमाह—एवमिति । द्वैतं नामरूपात्मकं विकल्पभिदास्तद्विषयो भ्रमः तज्जनिकां जीवानां विमोहिनीमसदर्थप्रकाशिकां तथाच भ्रमविषयद्वैत

अथापि विमोहनीं संसारभयजनयित्रीम् । मायां देहाद्यात्मबुद्धिम् उत्सृज्य सकलनिष्कलं सकलमथापि निष्कलं च नामरूपप्रपञ्चात्मना मायया भासमानत्वेऽपि सदानन्दचिदाकारेणैवावस्थितत्वाद्, यथा सर्पदण्डाद्यात्मनाविद्यया भासमानत्वेऽपि रज्जुः स्वेन रज्ज्वात्मनैव वर्तते । तद्वत्–एवम्भूतत्वाद् अद्वैतं सजातीयविजातीयस्वगतभेदशून्यं च ब्रह्म भावयेद् आत्मतयोपासीत ॥ ५७ ॥

तत्फलमाह—

यद्वत् सलिले सलिलं
क्षीरे क्षीरं समीरणे वायुः ।
तद्वद् ब्रह्मणि विमले
भावनया तन्मयत्वमुपयाति ॥ ५८ ॥

यद्वत् सलिले महति क्षिप्तं कलशादिगतं सलिलं तन्मयं भवति, यद्वच्च प्रभूते क्षीरे क्षिप्तमल्पं क्षीरं तन्मयं भवति,यद्वच्च समीरणे बाह्ये प्रविष्टश्चामरादिसम्भूतो वायुः तन्मयो भवति, तद्वद् विमले निष्प्रपञ्चे ब्रह्मणि भावनया आत्मतयोपास्त्या तन्मयत्वं पुमान् उपयाति ॥५८॥

ततः किमित्यत आह—

इत्थं द्वैतसमूहे
भावनया ब्रह्मभूयमुपयाते ।

---

कल्पस्वरूपां तत्कारणवासनारूपां चोत्सृज्य 'नेह नानास्ति किञ्चन' इति श्रुतिबलात्सकलं दृश्यं निष्कलमद्वैतं ब्रह्मैव इति आदरमैरन्तर्याभ्यां भावयेत् । सकलेति अनुस्वारलोप आर्षः ॥ ७९ ॥

को मोहः कः शोकः

सर्वं ब्रह्मावलोकयतः ॥ ५९ ॥

इत्थं भावनया द्वैतसमूहे ब्रह्मभूयम् अद्वितीयब्रह्ममयत्वम् उ याते द्वैतभ्रमप्रवाहे नष्टे सति सर्वम् ब्रह्मावलोकयतो ब्रह्मणोऽन्य किमप्यपश्यतो विशेषः को मोहः देहाद्यात्मभ्रमः, कश्च शोकः कोऽपि । यथोक्तं श्रुत्या 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' (ई० ७) इति ॥ ५९ ॥

नन्वात्माभिव्यक्तिनिमित्तस्य बुद्ध्यादेर्विलये कथमसौ प्रकाशे त्यत्राह—

विगतोपाधिः स्फटिकः

स्वप्रभया भाति निर्मलो यद्वत् ।

चिद्दीपः स्वप्रभया

तथा विभातीह निरुपाधिः ॥ ६० ॥

यद्वन्निर्मलः स्वच्छः स्फटिको विगतोपाधिः विगतसमुद्राद्युपाधिः स्वप्रभया स्वया प्रभया सितभास्वराकारेण भाति स्फुरति तथा चिद्दीपोऽपि निरुपाधिः स्वप्रभया स्वरूपसम्विदा विभाति ।

एतदुक्तम्भवति—यथोपाधिमन्तरेणापि स्फटिकमणिर्भासते भास-

---

ननु बुद्ध्यादेर्विलये कथमसौ भासेदित्याह—विगतेति । 'यस्य भासा सर्वमिदं विभाति' इति-'विज्ञातारमरे केन विजानीयात्' इति श्रुत्या च ब्रह्मणः स्वप्रकाशत्वात् सर्वावभासकत्वाच्च न तत्प्रकाशाय बुद्ध्यादेरपेक्षेति भावः ॥ ६० ॥

नस्वभावत्वाद् एवं बुद्ध्याद्युपाधिमन्तरेणाप्यात्मा भासेत स्वप्रकाश कारित्वादिति ॥ ६० ॥

आत्मन उपाधिवशाद् भानमङ्गीकृत्यैतदुक्तम् । वस्तुतस्तु क्वचिदपि नास्यान्यतो भानम् अपि तु स्वत एव निरञ्जनत्वेनान्यसम्बन्धासम्भवाद् व्याप्तत्वेनैकत्रावस्थानासम्भवाच्चिदेकरसत्वाच्चेत्याह—

गुणगणकरणशरीर-
प्राणैस्तन्मात्रजातिसुखदुःखैः ।
अपरामृष्टो व्यापी
चिद्रूपोऽयं सदा विमलः ॥ ६१ ॥

अयम् आत्मा सदागुणकरणगणशरीरप्राणैः गुणाः सत्त्वादयः, करणगण इन्द्रियगणः, शरीरं पिण्डं, प्राणोऽन्तर्वायुः, तैः । तन्मात्रजातिसुखदुः खैः तन्मात्राणि शब्दादीनि, जातयो मनुष्यत्वाद्याः, सुखं शुभ कर्मफलं, दुःखं अशुभकर्मफलं, तैश्च अपरामृष्टः । अभिव्यापीत्युक्तलक्षणस्याप्याकाशस्य मनोगम्यत्वमित्यत उक्तम् चिद्रूप इति ॥ ६१ ॥

देहसम्बन्धाभावान्नास्य दर्शनादिक्रियाकर्तृत्वमपीत्याह—

द्रष्टा श्रोता घ्राता
स्पर्शयिता रसयिता ग्रहीता च ।

---

क्लेशकर्मविपाकाशयैरपरामृष्ट पुरुषविशेष ईश्वर इति योगसूत्रे लक्षितं ब्रह्म स्मारयन् तद्रूपतां जीवस्याह—गुणेति । स्पष्टोर्थः ॥६१ ॥

मन्वस्य दर्शनादिक्रियया विकारित्वात्कथं विमलत्वमित्यत आह—द्रष्टेति ।

देही देहेन्द्रियधी-

विवर्जितः स्यान्न कर्तासौ ॥ ६२ ॥

असौ आत्मा देही देहसम्बन्धं प्राप्तो द्रष्टा श्रोता घ्राता स्पर्शयिता रसयिता ग्रहीता च भवति । अतो देहेन्द्रियधीविवर्जितः सन् न कर्ता दर्शनादिक्रियां प्रति कर्ता नं स्यात् । ग्रहीता मन्तेति मनोव्यापारोक्तिः । स्पर्शयितेति स्वार्थे णिच् एवं रसयितापि । स्प्रष्टेत्यर्थः । तथाच श्रुतिः—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।' (श्वे० ३-१९) इति ॥ ६२ ॥

मायामुत्सृज्य ब्रह्म भावयेदित्युक्तम् । तत्केन प्रकारेणेत्यपेक्षां प्रतिक्षिपति—

एको नैकत्रावस्थि-

तोऽहमैश्वर्ययोगतो व्याप्तः ।

आकाशवदखिलमिदं

न कश्चिदप्यत्र सन्देहः ॥ ६३ ॥

आत्मैवेदं सर्वं

निष्कलसकलं यदैव भावयति ।

---

असौ आत्मा देही देह संबन्धं प्राप्तः द्रष्टत्व श्रोतृत्वादिकं भजते देहादिविवर्जितः कथं द्रष्टृत्वादिधर्मानाश्रयेतेत्यर्थः । स्पर्शयितेति स्वार्थे णिच् स्प्रष्टेत्यर्थः । रसयितेत्यत्रापि रसग्रहीतेत्यर्थः ॥ ६२ ॥

मोहगहनाद्वियुक्त-
स्तदैव परमेश्वरीभूतः ॥ ६४ ॥

इदं दृश्यजातं सर्वम् आत्मैव तत्सत्तास्फूर्तिव्यतिरिक्तसत्तास्फूर्ति-रहितत्वाद्—

'यदिदं दृश्यते किञ्चिद्दर्शनात्तन्न भिद्यते ।
दर्शनं द्रष्टृतो नान्यद्द्रष्टैव हि ततो जगद् ॥

इति स्मरणाद्, 'आत्मैवेदं सर्वम्' । (छा० ७-२५-२) इति श्रुतेश्च । अतः अहमैवैश्वर्ययोगतोऽस्मात् सर्वात्मत्वविभूतिमत्त्वाद् एकोऽद्वितीयः परमस्वतन्त्रो वा । नैकत्र देशे काले वस्तुनि वा अवस्थितः, किन्तु व्याप्तः । किं व्याप्नोति, अखिलमिदं द्वैतजातं सर्वस्मिन् देशे काले वस्तुनि चावस्थितः आकाशवत् । तस्य वाय्वाद्यात्मताभावाद् वस्तुपरिच्छेदेऽपि कालदेशपरिच्छेदो व्यवहारावस्थायां नास्तीति दृष्टान्तता । न खलूपमेयोपमानयोः सर्वात्मना सादृश्यमिच्छन्ति सन्तः । अत्र अस्मिन्नर्थे कश्चिदपि सन्देहो नास्ति इत्येवं निष्कलसकलं निष्प्रपञ्चत्वेऽपि सप्रपञ्चं ब्रह्म यदा भावयति स्वात्मतयोपास्ते, तदा तस्मिन्नेव काले मोहगहनाद् अविद्याबन्धाद् विमुक्तः परमेश्वरीभूतः परमेश्वरस्वात्मसाक्षाद्बोधं गतः 'ब्रह्म वेद ब्रह्मैव भवति' (मु० ३-२-९) इति श्रुतेः । 'तदैवेति' ब्रह्मोपासनस्य तत्साक्षाद्बोधजनने न ज(न्मान्तरापे)क्षेति सूचितम् ।

स्यादेतत् । 'आत्मैवेदं सर्वम्' इत्ययुक्तं, तत्र वादिनां बहुधा विप्रतिपत्तिदर्शनात् । तथाहि—

केचित् पृथिव्यादिभूतचतुष्टयकार्यं चैतन्यगुणाश्रितं शरीरमेवात्मेति कार्यत्वं तस्य मन्यन्ते ।

तत्रास्य सर्वात्मताया दत्त एवाञ्जलिः, कार्यस्य कार्यान्तरेषु कारणेषु चाननुगमात् ।

केचित् प्राण एवात्मेति । तत्रापि सा न स्याद्, इन्द्रियाणामन्योऽन्यस्मिन्नर्थान्तरेषु चाननुगतेः ।

अन्येऽणु परिमाणं देहपरिमाणं वा प्रकाशद्रव्यमात्मेति । तेष्वपि सा न स्यात्, अणुपरिमाणस्य सर्षपादेर्मध्यमपरिमाणस्य घटादेश्च सर्वात्मत्वादर्शनात् ।

केचित्पुनः सर्वतो व्याप्तं क्षणिकत्वलक्षणं विज्ञानमात्मेति । तत्रापि सा न स्यात्, विज्ञानानामन्योऽन्यस्मिन् व्याप्त्यभावात् ।

अपरे शून्यमात्मेति मेनिरे । तेषां पक्षे व्यापक आत्मा व्याप्यं विश्वं व्यापनं क्रिया तत्त्रिकं द्रष्टृदर्शनादिकं च नास्तीति न सर्वात्मताप्रसङ्गोऽपि ।

अपरे तु पृथिव्यादिवद् बुद्ध्यादिगुणवान्नित्यो विभुः प्रतिशरीरं भिन्नः परमेश्वरादन्यस्तत्परतन्त्रोऽहंप्रत्ययगम्यो जडद्रव्यविशेष आत्मेत्यास्थिषत । तेषां तस्य परमेश्वरे क्षेत्रज्ञान्तरेषु क्षेत्रेषु च व्याप्त्यभावात् सर्वात्मत्वं नोररीकुर्वन्ति ।

एवं परमात्मप्रेरिता प्रकृतिः परमाणवो वा विश्वोपादानमिति मतेऽपि नात्मनस्सर्वात्मता स्यात्, निमित्तभूतानां कुविन्दकुलालादीनां पटकुटादिष्वनुगमादर्शनात् ।

ये पुनर्ब्रह्मपरिणामत्वं विश्वस्याश्रयन्ते तेषां ब्रह्मणः सर्वात्मत्वेऽपि

तदंशो जीव इति नात्मनः सर्वात्मता स्यात्।

औपनिषदाग्र्याणामपि ब्रह्मात्माधिष्ठितमाया विवर्तत्वं विश्वस्य येऽभ्युपगच्छन्ति, तेषामपि प्रकृतेरेव सर्वात्मता, न पुरुषस्य, कारणस्यैव कार्यानुगमानियमात्, नो वा तस्या अपि, पुंसस्तत्स्वरूपत्वाभावात्। तस्माद् 'आत्मैवेदं सर्वमि'त्ययुक्तमुक्तमिति।

नैष दोषः, स्वमायाशक्त्यनुप्रविष्टस्य ब्रह्मात्मन एव भोक्तृभोग्य भोग त्रितयात्मकप्रपञ्चात्मना विवर्तितत्वोक्तेः 'रसफाणितशर्करिके'(२६)त्यत्र।

अत एव 'जन्माद्यस्य यतः' ( ब्र०सू० १—१—२ ) इति जगत्कारणत्वं ब्रह्मणो लक्षणत्वेन सूत्रितवान् भगवान् पाराशर्यः।

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' (त० ३—१) इति भगवती श्रुतिरप्याह। 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' ( गी० १०—८ ) इत्यच्युतेन चोपदिष्टम्।

'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा।'
'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय!'
( गी० ७—६—७ )

इत्यन्यत्र,

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः
भूतग्राममिमं कृत्स्नम्' ( गी० ९—८ )

इति च। तस्माद् यथा क्षणिकस्य यागस्य स्वर्गसाधनत्वेन श्रुतौ श्रुतस्यापि न कालान्तरदेशान्तरदेहान्तरोपभोग्यफलसाधनत्वं

साक्षात्सम्भवतीति श्रुत्यर्थापत्त्या अपूर्वस्य द्वारत्वं कल्प्यते, एवमिहापि चिदेकरसविग्रहस्य भगवतोऽनन्तचेत्यचेतनप्रपञ्चत्वात्मनावस्थानं श्रूयमाणं मायया विना न सङ्गच्छते इति जगदुदयादौ निमित्तत्वमेव मायाया, उपादानत्वं तु तदधिष्ठातुरीश्वरस्यैवेति स्वीक्रियते । यथोक्तमाचार्यैः—

चित्रायागः पशुफल इति श्रूयमाणोऽपि चित्राऽ-
पूर्वद्वारं पशुफलतयाक्षिप्यते तत्र तद्वत् ।
चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽत्रापि पश्चा-
न्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन् ।

इति । तथाच प्रयोगः—विमतं चेतनोपादानं भवितुमर्हति कार्यत्वात् स्वप्नप्रपञ्चवदिति । नच घटपटादौ व्यभिचरितो हेतुः, तेषां पक्षान्तर्भूतत्वात् । विपक्षे जगतः कार्यताहानिर्बाधः अचेतन प्रधानपरमाण्वादेः स्वात्मन्यपि किञ्चिद् ज्ञातुं कर्तुं चासमर्थत्वेन जगदुत्पादकत्वायोगात् । तस्मादात्मनः सार्वात्म्ये नास्मत्पक्षे विरोधगन्धोऽपीत्यभिप्रायः ॥ ६३ ॥ ६४ ॥

एवं भगवतः सर्वात्मत्वे सिद्धे फलितमर्थमाह—

यद्यत्सिद्धान्तागम-
तर्केषु प्रब्रुवन्ति रागान्धाः

---

यद्यदिति । वैष्णवशैव शाक्तादिसिद्धान्तप्रतिपादकेषु पाञ्चरात्राद्यागमेषु तदनुकूलतर्केषु भ्रमन्ति 'अयमेवसिद्धान्तः समीचीनः' इति भ्रमन्ति चित्तस्वास्थ्यं न लभन्ते । तत्तेषां मतं 'सर्वमात्मा' बोद्धाधीस्तया अनुमोदायः इति तदर्थः।

अनुमोदामस्तत्त-
न्त्रेषां सर्वात्मवादधिया ॥ ६५ ॥

स्वसिद्धान्तादन्येऽत्र सिद्धान्ताः प्रामाणिकत्वेनाभ्युपगतानि कर्ममीमांसकसेश्वरनिरीश्वरसांख्यनैयायिकवैशेषिकशून्यविज्ञानक्षणिकवादिक्षपणकस्वभाववादिमतानि । आगमाः वेदान्तलक्षणस्वागमव्यतिरिक्ताः कर्मकाण्डश्रुतिशैववैष्णवशाक्तसौराद्यागमाः प्रत्यक्षानुमानागम्यस्य प्रवृत्तिनिवृत्तिलक्षणस्य धर्मस्य सगुणस्य निर्गुणस्य च ब्रह्मणस्तदनुष्ठानज्ञानफलस्य तदधिकारिणां तत्स्थानां च प्रकाशकाः अनादि सिद्धा ग्रन्थाः । तत्तत्सिद्धान्तागमोपदिष्टास्तदर्थसाधनार्था अनुमानार्थापत्तिरूपास्तर्काः । व्याप्याद्व्यापकप्रसञ्जनं हि तर्क उच्यते अनग्नित्वे निर्धूमत्वं स्यादिति । तच्चानुमानार्थापत्त्योस्तुल्यम् । अग्निना व्याप्तोऽयं धूम इति हि धूमसत्तयाग्निसत्ता महीधरेऽनुमीयते, भोजनव्याप्तं पीनत्वमिति च दिवा भोजनविहीनदेवदत्तपीनत्वेन रात्रिभोजनं निश्चीयते इति तस्मात्तर्कशब्देनोभयोरपि ग्रहणं यत्तत्सिद्धान्तागमतर्केषु सिद्धान्ताश्च आग-

---

अनुमोदाम इति परस्मैपदम् अनुदात्तेत्वलक्षणस्यात्मनेपदस्यानित्यत्वात् ।

नन्वस्मिन् मते सर्वस्य चेतनत्वे सर्वत्र चेतनकार्यं स्यादिति चेन्न चेतनसन्निधानेन तत्तत्कार्ये जननीये सेन्द्रियद्रव्यस्य कारणत्वात् । तथा च चरके पतञ्जलिः—

'सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्'

( च० सं० सूत्रस्था० ( १।४७ )

अयमाशयः—कणादादयोऽपि महर्षयो मायिकत्वेन ब्रह्मरूपत्वेन च ज्ञातस्य प्रपञ्चस्य बोधनीयशिष्याद्यधिकारानुसारेण मायिकत्वाद्यपलप्य (स्व) ज्ञातपरमा-

माश्चतर्काश्च तेषु रागान्धाः स्वपक्षरागेणान्धाः स्वदोषनिरीक्षणे च मूढाः प्रब्रुवन्ति परपक्षदूषणं स्वपक्षसाधनं च कुर्वन्तो मुख्यत्वेनोप-दिशन्ति । तत्तदनुमोदामः सत्यमेवोक्तमायुष्मतेति तुष्यामः । न विवादं कुर्मः कुतः तेषां सर्वात्मवादधिया सर्वात्मा भगवानेव एतैः कर्मेश्वरपुरुषप्रधानपरमाणुशून्यविज्ञानसन्तानक्षणिकस्वलक्षणार्थसर्वं नैकान्तिकस्वभावशब्दैर्ब्रह्मविष्णुरुद्रमहेश्वरसदाशिववासुदेवसंकर्षणप्रद्यु-म्नानिरुद्धसरस्वतीपद्मवासिनीपार्वतीभास्करादिशब्दैश्च गृह्यते इति निश्चि-त्येत्यर्थः ।

तदेतदभिप्रेत्य श्रीगौडपादाचार्योक्तिः—

"ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
विवदामो न तैः सार्द्धमविवादं निबोधत ॥"

इति । श्रीभगवत्पादोक्तिश्च—

"वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः
शास्त्रैश्चान्यैः सात्त्वततन्त्रैश्च यमीशम् ।
दृष्ट्वाथान्तश्चेतसि बुध्वा विविशुर्यं
तं संसारध्वान्तविनाशं हरिमीडे" इति ॥ ६५ ॥

---

ण्वादिभ्यः सृष्टिं, समवायादीनां पदार्थत्वं चातीन्द्रियदृशा ज्ञात्वोक्तवन्तः । तत् तदुक्तपदार्थानां शुष्कतर्कबलेनान्यथाकारणं तेषां खण्डनं चायुक्तमेव, असत्सु मासम-नेष्वर्थेषु ऋष्यनुसारेणैव कल्पनाया औचित्यात् ।

एतदुक्तं भवति—ऋषीणां सर्वज्ञानां परस्परं मतभेदो न संभवति किन्तु प-म्परया स्थूलारुन्धतीन्यायेन सर्वात्मवादे एव तात्पर्यम् । तथा च—'हरिः 'गुरुं प्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति ॥ ६६ ॥

ननु कर्ममीमांसकादयः शैवादयश्चैनं भगवद्बुद्ध्या न पश्यन्ति, किन्तु कर्मकामार्थादिबुद्ध्यैव । तत्कथं तेषां तत्तत्फलप्राप्तिर्दृश्यते श्रूयते चेत्यत्राह—

सर्वाकारो भगवा-
नुपास्यते येन येन भावेन ।
तं तं भावं भूत्वा
चिन्तामणिवत्समभ्येति ॥ ६६ ॥

सर्वाकारो हि भगवान् सर्वात्मत्वात् । अतोऽसौ येन येन भावेन आकारेण तैस्तैः उपास्यते तं तं भावम् आकारं चिन्तामणिवद् भूत्वा समभ्येति प्राप्नोति स्वतो निराकारत्वादित्यर्थः । श्रुतिश्च "तं यथा यथोपासते तदेव भवति" इति श्रीभगवद्वाक्यं च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (गी० ४–११) इति ॥६६॥

उक्तमुपसंहरति—

नारायणमात्मानं
ज्ञात्वा सर्गस्थितिप्रलयहेतुम् ।

---

ननु शैवाः शिवं वैष्णवा विष्णुं बौद्धा बुद्धमुपासते इति परस्परमत्यन्तभिन्नानां मतं कथं भगवतानुसुष्यते इत्यत आह—सर्वाकार इति । एक एव भगवान् उपासकानां भावनानुरोधेन तत्तद्रूपो भूत्वा तेभ्यः कर्म फलं ददाति यतः भगवान् सर्वाकारः । तथाच भगवद्वाक्यम् 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति ॥ ६६ ॥

सर्वज्ञः सर्वगतः

सर्वः सर्वेश्वरो भवति ॥ ६७ ॥

सर्गस्थितिप्रलयहेतुं विश्वस्येति शेषः । न स्थितिमात्रहेतुं स- वेंश्वरं नारायणमात्मानं ज्ञात्वा आदरनैरन्तर्याभ्यां चिरमुपास्य सर्वो जनः न ब्राह्मणः परिव्राडित्यादिनियमः यः कोऽपि देवतागुरुभक्तिमान् सर्वेश्वरो भवति नारायणमात्मत्वेन साक्षात्करोतीत्यर्थः । कोऽयं सर्वे- श्वरो नामेत्यत उक्तं सर्वज्ञः सर्वगत इति ॥ ६७ ॥

तत्साक्षात्करणेन किमित्यत आह—

आत्मज्ञस्तरति शुचं

यस्माद्विद्वान् बिभेति न कुतश्चित् ।

मृत्योरपि मरणभयं

न भवत्यन्यत् कुतस्तस्य ॥ ६८ ॥

आत्मज्ञः शुचं सर्वदुःखं तरति । कुतः यस्माद्विद्वान् भगव- न्तमात्मत्वेन पश्यन् पुमान् कुतश्चिन्न बिभेति । तदपि कथं तस्य म- रणभयमपि न भवति अन्यद् भयं कुतः । तत्र हेतुर्मृत्योरपि स्वयं मृत्युरूपस्येत्यर्थः । श्रुतिश्च 'तरति शोकमात्मविद्' ( छा० ७-

---

'आत्मज्ञस्तरति शुचम्' इत्यनेन आत्मज्ञानेन शोकपदवाच्यसंसारस्य निवृत्ति- सूचनात्संसारस्य ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं सूचितम् । एतदुक्तंभवति—यदा जीवः स्वस्वरूपं नारायणमात्मानं जानाति तदा आत्माज्ञानभातस्य बन्धस्य नि-

१–३ ) इति । एतदुक्तं भवति—कालसकाशाद्धि सर्वेषां मरणभयं भवति, अयं तु परकालात्मा भगवानेव, तन्नास्य मरणभयप्राप्तिः अन्यद्भयं तु दूरत इति ॥ ६८ ॥

किंपुनरत्र प्रकृतिपुरुषयोः स्वरूपमुक्तं भवतीत्यत्राह—

क्षयवृद्धिवध्यघातक
बन्धनमोक्षैर्विवर्जितं नित्यम् ।
परमार्थतत्त्वमेतद्
यदतोऽन्यत् तदनृतं सर्वम् ॥ ६९ ॥

क्षयवृद्धी वध्यघातकौ बन्धनमोक्षौ क्षयवृद्धिवध्यघातकबन्धनमोक्षाः तैः नित्यं विवर्जितं यद् एतत् परमार्थतत्त्वं, पुरुषतत्त्वम्, अतोऽन्यत् क्षयवृद्ध्यादिमत् यत् तत् सर्वमनृतं प्रकृतितत्त्वम् ॥ ६९ ॥

---

र्वेनान्मृत्योरपि भयं न भवति अन्यस्मात्तु कुतो भवेदित्यर्थः ॥ ६७ ॥ ६८ ॥

क्षयवृद्धीति । परमार्थतत्त्वं-ब्रह्म सत्यम् । ततोऽन्यद्विकारजातमनृतमसत्यम् । तथा च शाङ्करभाष्यम् 'मृत्पिण्डादिदृष्टान्तैर्हि सतो ब्रह्मणः एकस्य सत्यत्वं, विकारस्य चानृतत्वं प्रतिपादयति शास्त्रम्' इति । 'सत' इत्यस्याद्यन्तयोः सत्त्वेन मध्येऽपि सत्त्वानुमानेन कालत्रयाबाध्यत्वरूपं सत्यत्वं, प्रपञ्चस्य तु आद्यन्तयोरसत्त्वेन मध्येप्यसत्त्वानुमानेन कालत्रयबाध्यत्वरूपमसत्यत्वमित्यर्थः । मध्ये कदाचित्सत्त्वेन प्रपञ्चस्य प्रतीतिस्तु भ्रमएव । उत्पत्त्यादीनां भ्रमविषयाणामेव तत्रानुवाद इति विकारत्वप्रतीतिरपि भ्रम एवेति तत्त्वम् ।

एतेन मायाया अनादित्वं पराकृतम् ।

ब्रह्मातिरिक्तस्य सर्वस्य विकारत्वप्रतिपादनेन मायाया अपि सादित्वावगमात् । सा च न भावस्वरूपाऽनिर्वचनीया मानाभावादिति प्रागुक्तं न विस्मर्तव्यम् ॥ ६९ ॥

एवं तयोः स्वरूपं संक्षिप्य तद्विभागज्ञानफलमाह—

एवं प्रकृतिं पुरुषं
विज्ञाय निरस्तकल्पनाजालः ।
आत्मारामः प्रशमं
समास्थितः केवलीभवति ॥ ७० ॥

एवम् उक्तप्रकारेण प्रकृतिं पुरुषं च विज्ञाय विवेकतो ज्ञात्वा निरस्तकल्पनाजालः संत्यक्तद्वैतभ्रान्तिप्रवाहः आत्मारामः आत्मैवारामः क्रीडास्थानमस्येति तथा अखण्डानन्दानुभवरूपं स्वात्मानमेवेक्षमाणः प्रशमं समास्थितः, तत्रैव लीनचेताः केवलीभवति कैवल्यं लभत इत्यर्थः । "तथा विद्वान्नामरूपाद्विमुक्त" ( मु० ३–२–८ ) इति श्रुतेः ॥ ७० ॥

एवं पुंसि मुक्ते तद्देहेन्द्रियप्राणबुद्ध्यादयः किं तदैव नश्यन्ति किं वा कञ्चित्कालं प्रतीक्षन्त इत्याकाङ्क्षायां द्वितीयं पक्षं पक्षीकृत्याह—

नलकदलिवेणुवाणा
नश्यन्ति तथा स्वपुष्पमासाद्य ।

---

प्रकृतिपुरुषविवेकफलमाह—एवमिति । प्रकृतिर्माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति स्मरणात् । केवलीभवति कैवल्यं लभत इत्यर्थः । एतेन स्वस्वरूपावाप्तिर्मोक्ष इति सूचितम् ॥ ७० ॥

तद्वत्स्वभावभूताः

स्वभावतां प्राप्य नश्यन्ति ॥ ७१ ॥

कदलिवेण्विति मात्राभङ्गभयाद्ध्रस्वः । नलो बृहत्तृणविशेषः, कदली-रम्भा, वेणुर्मस्करः, वाणः शरः, नलश्च कदली च वेणुश्च वाणश्च नलकदलिवेणुवाणाः ते यथा स्वपुष्पं स्वस्वकार्यम् आसाद्य जनयित्वा नश्यन्ति यावन्न जनयन्ति तावन्न नश्यन्ति, तद्वत्स्वभावभूताः स्वभावात्प्रकृतेः संभूता देहादयः स्वभावतां स्वेषां संबन्धिनो भावा विकाराः फलानि तेषां भावः स्वभावता तां प्राप्य स्वस्वकार्यं कृत्वा नश्यन्ति न सद्यो नश्यन्ति प्रारब्धकर्मवशात् कंचित्कालं स्थित्वा सुखदुःखमोहलक्षणं स्वकार्यमापाद्यैव नश्यन्तीत्यर्थः । तथा च श्रुतिः 'आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति' ( बृ० ४-४-६ ) इति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा० ६-१४-२०) इति, 'तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते' ( बृ० ४-४-७ ) इति च ॥ ७१ ॥

देहादिलक्षणां प्रकृतिमनात्मतया परित्यज्य कैवल्यं गतः पुमान् किंरूपः स्यादित्यत्राह—

भिन्नेऽज्ञानग्रन्थौ

छिन्ने संशयगणे शुभे क्षीणे ।

---

पुंसि मुक्तेऽपि देहादयः प्रारब्धकर्मभोगकालं यावत्तिष्ठन्तीत्याह—नलेति । यथा नलादयः स्वपुष्पं जनयित्वा नश्यन्ति तथा स्वभावात्प्रकृतेः संभूता देहादयः स्वेषां संबन्धिनो भावा विकाराः फलानि स्वभावास्तेषां भावः स्वभावता तां प्राप्य फलभोगं जनयित्वा नश्यन्तीत्यर्थः । नलो बृहत्तृणविशेष इति ॥ ७१ ॥

दग्धे च जन्मबीजे
　　परमात्मानं हरिं याति ॥ ७२ ॥

अज्ञानग्रन्थौ आत्माज्ञानेन कृते ग्रन्थौ देहाद्यात्माभिमाने भिन्ने प्रकृतिपुरुषविभागज्ञानेन नष्टे । अत एव संशयगणे छिन्ने देहादिव्यतिरिक्तः कश्चिदात्मास्ति, किं वा नास्ति अस्ति चेदपि स किमीशोऽनीशो वा, एकोऽनेको वा, ईश्वरश्चेदपि स किं सर्वदेहिनामन्तर्वर्तते किं वा कैलासगिरिशिखरे किं वा क्षीराब्ध्यादौ किं वा पश्चिमायां दिशि वसति किं वा दक्षिणस्यामथवोत्तरस्यामाहोस्वित्प्राच्यामुतोपरिष्टादथवाधस्तादित्यादयः संशयाः ।

'आत्मस्थमात्मानमजं न दृष्ट्वा भ्रमन्ति मूढा गिरिगह्वरेषु ।
पश्चादुदग्दक्षिणतः पुरस्तादधः स्विदासीदुपरिस्विदासीद् ॥

इति श्रुत्यैव प्रकाशिताः तेषां गणे छिन्ने आत्मतत्त्वसाक्षाज्ज्ञानेन बाधिते (शुभे) शुभाशुभे कर्मणि च क्षीणे आत्माज्ञानलक्षणस्वकारणविनाशेन विलीने । अत एव जन्मबीजे पुनर्जन्मनो बीजभूतेऽज्ञाने दग्धेऽभावं गते सति हरिं याति। कोऽसौ हरिरित्यत उक्तं परमात्मानमिति 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् स ईक्षत' (ऐ० १-१) इत्यादिश्रुतिप्रसिद्धः परमात्मेत्यर्थः । श्रुतिश्च—
"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

---

भिन्न इति । अत्र—'शुभे' इत्यस्य स्थाने 'शुभाशुभे' इति क्वचित्पाठः स च मात्रात्रयाधिक्यादपपाठः । हरिं याति स्वस्वरूपं प्राप्नोतीत्यर्थः । अवाप्तमेव स्व

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥ ( मु० २-२-८ ) इति । कैवल्यं गतो जीवः पर एव भवतीति श्लोकार्थः ॥ ७२ ॥

किमस्मान्मानुषाद्देहाद् देहान्तरं प्राप्य मुच्यते किं वाऽनेनैव देहेन, अनेनापि किमिहैव मुच्यते किं वा देशान्तरं गत्वेत्यत्राह—

मोक्षस्य नैव किञ्चि-
द्धामास्ति न चापि गमनमन्यत्र ।
अज्ञानमयग्रन्थे-
र्भेदो यस्तं विदुर्मोक्षम् ॥ ७३ ॥

मोक्षस्य संबन्धि तदुद्भवहेतुभूतं धाम शरीरम् अस्मादन्यत् किञ्चिन्नैवास्ति नाप्यन्यत्र गमनम् "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्" (बृ० १-४-१०) इति श्रुतेः । उक्तेऽर्थे हेतुत्वेन मोक्षस्वरूपमाह—अज्ञानमयग्रन्थेरज्ञानरूपस्य बन्धहेतोर्यो भेदः संहाररूपः तं मोक्षं विदुः स च तत्त्वज्ञानमेव स्वसिद्धावपेक्षते, न देहान्तरं देशान्तरं वेत्यर्थः । अनेनास्मादन्ये मोक्षपक्षा आक्षिप्ताः ।

---

स्वरूपमज्ञानेनाप्राप्ततया अज्ञाने नष्टे प्राप्नोतीवेति यावत् ॥ ७२ ॥

'परमात्मानं हरिं याति' इत्युक्त्या देशान्तरगमनं मोक्ष इति प्रतीयते तद्व्युदस्यति—मोक्षस्येति । अज्ञानमयग्रन्थेरनात्मन्यात्माभिमानलक्षणाया भेदो निवृत्तिरेव मोक्षः न देशान्तरगमनमित्यर्थः ॥ ७३ ॥

कथं—

यत्तावन्मरणं मोक्ष इति चार्वाकमतं तन्मरणस्य स्वविनाशरूपत्वेनापुमर्थत्वादप्रत्यक्षत्वेनानिश्चिताकारत्वाच्चायुक्तम् ।

यत्पुनः क्षपणकाः सततोर्ध्वगमनं मोक्षमिच्छन्तीति तदप्ययुक्तम् । सतताधोगतिवत् प्रयासात्मकत्वेनास्यापुरुषार्थत्वात् ।

विशुद्धविज्ञानसन्तानोदयो मोक्ष इति यद्विज्ञानवादिमतं तन्मोक्षसाधनानुष्ठातुर्विषयोपरक्तविज्ञानसन्तानस्य नष्टत्वादकृताभ्यागमकृतविप्रणाशदोषेण विषयोपरागाभावे विज्ञानस्य भेदकाभावेन सन्तानरूपत्वासिद्धेश्चायुक्तम् ।

सर्वशून्यतालाभो मोक्ष इति यन्माध्यमिकमतं, तत्र शून्यस्य स्वप्रकाशत्वे सत्त्वप्रसङ्गादस्वप्रकाशत्वे साधकाभावेनासिद्धत्वाच्चानुपपन्नम् ।

बुद्ध्यादिनवगुणप्रहाणेनात्मनोऽवस्थानं मुक्तिरिति यत्तर्कमतं, तच्च पाषाणादिवदात्मनो जडताप्राप्तिरूपत्वान्मोक्षे परमेश्वरवदिच्छाज्ञानक्रियावत्त्वापत्तेश्चानादरणीयम् ।

यत्प्रकृतिपुरुषविवेकात्मा मोक्ष इति निरीश्वरसाङ्ख्यमतं, तच्च मोक्षे प्रकृत्यदर्शनेन ततो विवेकस्य दुस्संपादत्वात् तद्दर्शने बन्धप्राप्तेश्चाविचारसुन्दरमेव ।

यत्तु पुनः सेश्वरसाङ्ख्यमतं क्षेत्रज्ञस्य परमपुरुषसायुज्यं मोक्ष इति, तदप्यचारु, प्रागनीश्वरस्येदानीं तद्भावे मोक्षस्य कादाचित्कत्वेन नित्यपुरुषार्थत्वासिद्धेरकृताभ्यागमकृतविप्रणाशदोषस्य परिहर्तुमशक्यत्वाच्च ।

आत्मनः स्वरूपावस्थानं मोक्ष इति यत्कर्ममीमांसकमतं, तच्चा-

त्मनः प्राक्स्वरूपावस्थानेनाधुना न किञ्चित्कर्तव्यं सिद्धत्वात्, अनवस्थाने स्वरू(पत्वा) (पा) सिद्धिरिति दूष्यमेव ।

यत्तु, पाशुपताः परमशिवसाम्यावाप्तिर्मुक्तिरित्याहुः, तत्र साम्यं नाम किमिति वाच्यम् । सर्वज्ञानक्रियाशक्तिमत्त्वं चेत्, न—सर्वात्मत्वाभावे सर्वज्ञानक्रियाशक्तिमत्त्वासिद्धेः, तद्भावे च मुक्तानां परमशिवताप्राप्त्या तत्साम्यवचनानुपपत्तेः । अथाणवमायीयकार्ममलविहीनत्वं तत्साम्यमित्युच्येत तदप्यसत् ज्ञातृत्वस्वभावत्वेन निर्भेदत्वेन निर्मुक्तबन्धनत्वेन विना मलत्रयविधुरताया असिद्धेः, उक्तलक्षणत्वे च परमेश्वराद् भेदासिद्धेश्च । विपर्यये परस्य विपरीताकारताप्रसङ्गः ।

यत्पुनः सात्त्वता वासुदेवादिचतुर्व्यूहात्मनो हरेः सालोक्यसामीप्यसारूप्यसायुज्यस्वलक्षणो मोक्ष इत्याचक्षते, तत् सालोक्यादीनां प्रागसत्त्वेऽधुनासत्त्वायोगात् प्राक्सत्त्वे तत्सिद्ध्यर्थस्य प्रयासस्यानर्थकत्वात् भेददर्शनमयत्वेन सभयत्वाच्चानुपादेयमेव ।

अतो ब्रह्मात्मैक्यसाक्षाज्ज्ञानेन तदज्ञानोपशान्तिरेव मोक्षः ।

तथा च भगवद्वचनम्—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । (गी० ५–१५)
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ गी० ५-१६ )
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः' ॥ (गी० ५-१७)

इति । 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः' ( छा० ७ २६-२ ) इति चोपनिषदा अविद्यास्तमय एव

मोक्ष इति साक्षादुपदिष्टम् । तथा च प्रयोगः—विमतंमात्मतत्त्वज्ञाननिवर्त्यं तदज्ञानविलसितत्वात् स्वाप्नजगद्वद् इति ।

का पुनरियमविद्यानिवृत्तिर्नाम, या मुक्तिरित्युच्यते सा तावत् सती आत्मवन्नित्यत्वापत्तेः, नाप्यसती ज्ञानस्य निष्फलत्वापत्तेः, नापि सदसती सत्त्वासत्त्वयोः परस्परबाध्यबाधकत्वेनाविवादमेकत्र वर्तनानुपपत्तेः, नापि सदसद्विलक्षणा अविद्यायास्तथात्वात् भावाभावयोरैकरूप्यायोगाच्च, नापि चतुष्कोटिविनिर्मुक्तरूपा शून्यस्यैव तल्लक्षणत्वादिति चेद्—

न सत्प्रतियोगिनोऽसत एव शून्यशब्दार्थत्वात् सदसद्विलक्षणाविद्याप्रतियोगिनस्तन्निवृत्तेः पञ्चमप्रकारत्वेन शून्यस्वलक्षणत्वाभावाच्च । अतः सच्चासच्च सदसच्च सदसद्विलक्षणं चेति यच्चतुर्विधं रूपं, तद्विलक्षणं किञ्चनाविद्यानिवृत्ते रूपमाश्रीयताम् ।

किञ्चमिथ्यावस्तुनो निवृत्तिर्न तदधिष्ठानाद् याथातथ्येन वीक्ष्यमाणादन्यद् वस्तुतोऽस्ति तस्यैव तन्निषेधे परिशिष्यमाणत्वात् ।

अतो ब्रह्म विद्याप्रतिबिम्बितं स्वाध्यस्तायाः सकार्याया अविद्याया निवर्तकम् । तत्स्वरूपमेवाविद्यानिवृत्तिरिति सिद्धम् ॥ ७२ ॥

ननु प्रकृतेः पुरुषस्यात्यन्तविलक्षणाकारत्वे सकार्यायास्तस्यास्ततः पृथक् सत्त्वादद्वितीयताहानिरित्यत्राह—

बुद्ध्वैवमसत्यमिदं

विष्णोर्मायात्मकं जगद्रूपम्।

ननु ब्रह्मणः पृथग् जगतः सत्त्वात् कथमद्वितीयत्वं ब्रह्मण इत्यत आह—बुद्ध्वे-

विगतद्वन्द्वोपाधिक

भोगासङ्गो भवेच्छान्तः ॥ ७४ ॥

एवं 'सत्यमिव जगदसत्यं' (श्लो०) इत्यादिनोहोक्तप्रकारेण मायात्मकं मायामयम् इदं जगद् विष्णोरेव तदधिष्ठातुः असत्यं रूपं बुद्ध्वा सनिदानं देहदैहिकप्रपञ्चमन्वयव्यतिरेकाभावपरिहारेणात्मन्येवाध्यस्तं निश्चित्य विगतद्वन्द्वोपाधिकभोगासङ्गः विगतो द्वन्द्वोपाधिको देहादिनिमित्तो भोग आसमन्तात् सङ्गो यस्य स तथा आत्मन्यध्यस्तत्वात् तद्व्यतिरेकेण विश्वं नास्तीति देहादिसङ्गमपास्यात्मन्येव सक्तो भूत्वा शान्तः तत्रैव लीनमानसो भवेत् ॥ ७४ ॥

---

मिति । इदं जगद् विष्णोर्मायात्मकमतोऽसत्यमिति ज्ञात्वा भोगेष्वसक्तः सन् शान्तो भवतीत्यर्थः । माया वासनारूपा सूक्ष्माविद्येत्यर्थः ।

तथा च 'यथा च तक्षोभयथा' इति सूत्रे भाष्यम् "स्वाप्नो विकारः वासनामयः न पारमार्थिकोऽस्ति" इति 'तदनन्यत्वम्' इति सूत्रे च 'यथा च मृगतृष्णोदकादीनामूषरादिभ्योऽनन्यत्वम्, दृष्टादृष्टस्वरूपत्वात्, एवमस्य प्रपञ्चस्य ब्रह्मव्यतिरेकेणेति भाव' इति 'सर्वव्यवहारस्य प्राग् ब्रह्मात्मविज्ञानात्सत्यत्वम् स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' इति च । अतो वासनामयस्वाप्नपदार्थतुल्यतोक्त्या जगतोऽपि वासनामयत्वम् ।

यत्तु सदसद्विलक्षणा ऽनिर्वाच्या माया—

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी ॥

इति बृहन्नारदीयादिति ।

तन्न—व्यवहारकाले सत्त्वेन प्रतीतेर्न केवलमसद्रूपा, प्रतिक्षणं परिणामितया

प्रतीतिर्बाधदर्शनाद्विशेषदर्शनबाध्यत्वाच्च न केवलं वास्तवस्वरूपा, अत एव वास्तवोभयरूपापि न विरोधाच्च ।

अत एवानिर्वाच्या सत्येव असत्येवेति निर्धार्य वक्तुमशक्या । किन्तर्हुभयविलक्षणा नेत्याह—मिथ्याभूता प्रतिभासमात्रविषयत्वात् । सनातनी—भ्रमपरम्पराजनकपरम्पराकत्रासनारूपणेत्यर्थकत्वेन तस्य तदुक्तार्थेऽप्रमाणत्वात् । तस्मादारोपितं सत्त्वम् परमार्थतस्त्वसत्त्वमित्येव रम्यम् ।

तदुक्तम्—'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्' इति । नित्यं प्रवाहरूपं यावत्संसारं सत्त्वात् ।

न्यायदर्शनेऽपि 'बुद्धिसिद्धं तु तदसत्' इति सूत्रेणोक्तम् । तथाहि—चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते न तु तस्यां संयुक्तबाह्यविषयप्रतिबिम्बः स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासम्भवात् ।

तथा स्मृतिरपि—

'विप्र पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥

इति स्पष्टं वासनामयत्वं प्रतिपादयति नानिर्वचनीयत्वमिति ॥

तथा साङ्ख्यसूत्राण्यपि 'नासतः ख्यातिर्नृशृङ्गवत्' 'नानिर्वचनीयस्य तदभावात्' 'नान्यथाख्यातिः स्ववचोव्याघातात्' इति ।

व्यासस्यापि मायापदेन सदसत्ख्यातिरेव विवक्षिता नानिर्वचनीयख्यातिः, साङ्ख्यदूषितानिर्वचनीयख्यातेः तत्सूत्रानारूढत्वात् ।

तथा श्रीहर्षोऽपि "परकीयरीत्येदमुक्तम् 'अनिर्वचनीयत्वं विश्वस्य पर्यवस्यति' इति । वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः न साध्वीयं भवतां विचारव्यवस्था भवत्कल्पितव्यवस्थयैव व्याहतत्वात्" इति ।

सत्त्वासत्त्वव्यवस्था तदन्यतरव्यवस्थेत्यर्थः । भरं–प्रातिभासिकप्रपञ्चभरम् । अनिर्वचनीयत्वं–निर्धार्य सत्त्वासत्त्वान्यतररूपेणानिर्वचनीयत्वं न तु सदसद्विलक्षणत्वमिति तद्व्याख्यातारः । एतेन सदसद्विलक्षणत्वरूपानिर्वचनीयत्वे तदस्वरसः स्पष्टमेवावगम्यते इति ।

तथा भागवतमपि—

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।

तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥

इति । यद्विनाप्यर्थमात्मन्यधिष्ठाने प्रतीयेत । सद्यात्मरूपे न प्रतीयेत तत्प्रत्ययाप्रत्ययरूपमात्मनो मायां विद्यात् यथाऽऽभासः–द्विचन्द्रादिः । यथा च तमः–राहुर्ग्रहमण्डले सन्नपि न प्रतीयते इत्यर्थः । असदर्थप्रकाशनस्य मायात्वादेवमेव युक्तम् ।

ऋतेऽर्थं यत्प्रतीयेतेत्युक्त्या च भ्रमस्थलेऽनिर्वचनीयरजतोत्पत्तिरप्रामाणिकीति लभ्यते इति ।

अत एव प्रकृतैतावत्त्वं हि प्रतिषेधति इति सूत्रे 'अथात आदेशो नेति नेति' श्रुतिव्याख्यावसरे 'पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति उत्तरो वासनाराशिम्' इति भाष्ये उक्तम् ।

यच्च शाङ्करभाष्यादौ क्वचिद् अनिर्वचनीया मायेत्युक्तमिति प्रतीयते तत् तत्त्वान्यत्वाभ्यामनिर्वाच्यत्वरूपानिर्वचनीयत्वपरं न तु सदसद्विलक्षणत्वरूपानिर्वचनीयत्वपरम् । तथा च शाङ्करभाष्यम् 'अविद्याकल्पितेन नामरूपलक्षणेन भेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदम् पारमार्थिकेन रूपेण सर्वव्यवहारातीतम्' इति ।

अविद्यापूर्वतनसंस्काररूपा । व्याकृतं स्थूलम् । अव्याकृतम् तज्जन्यः संस्कारः अस्थूलम् ।

यत्तु वाचस्पतिमिश्राः—'मृगतृष्णाजलादि न सत् नासत् नापि सदसत् विरोधादित्यनिर्वाच्यमेव मरीचिषु तोयमास्थेयम् । अध्यस्तं च तोयम् परमार्थतोयमिव भासते । अत एव पूर्वदृष्टमिव । तत्त्वतस्तु न तोयं न पूर्वदृष्टं किन्त्वनिर्वाच्यम-

एवं मुक्तस्याविद्यासंस्कारात् कंचित्कालं देहे जीवत्यपि नानर्थप्राप्ति-रित्याह—

(१)बुद्ध्वा विभक्तां प्रकृतिं
पुरुषः संसारमध्यगो भवति।
निर्मुक्तः सर्वकर्मभि-
रम्बुजपत्रं यथा सलिलैः॥ ७५॥

प्रकृतिं देहादिरूपिणीं विभक्ताम् आत्मनोऽत्यन्तविलक्षणां बुद्ध्वा अनात्मतया त्यक्त्वा पुरुषः परमात्मभावं गतः संसारमध्यगः देहवि-

---

वृतम् । देहादिप्रपञ्चोऽप्यनिर्वाच्यः अपूर्वोऽपि मिथ्याप्रत्ययोपदर्शित एव ... स्मन्यध्यस्यते' इत्याहुः।

तत्रानिर्वाच्यत्वम् सत्त्वासत्त्वान्यतरधर्मेण निर्धाय वक्तुमशक्यत्वरूपं ... सदसद्विलक्षणत्वरूपम्। अत एव 'ज्ञानात्पूर्वमविद्यमान इत्यर्थस्य ... 'अपूर्व' इत्यस्य नासङ्गतिः सदसद्विलक्षणत्वरूपस्यानिर्वाच्यत्वपदार्थत्वे अनि... चनीयोत्पत्त्यङ्गीकारे च तदसङ्गतिः स्यादेव।

सांख्यसूत्रे च सदसद्विलक्षणत्वरूपानिर्वचनीयत्वस्यैव खण्डनं 'नानिर्वच... यस्य ख्यातिरि'ति सूत्रेण कृतम् न तु तत्त्वान्यत्वाभ्यां निर्वक्तुमशक्यत्वरूपस्यानि... र्वचनीयत्वस्येति निपुणमीक्षणीयम्।

तस्माद्भ्रमाख्या स्थूलाऽविद्या। वासनारूपा च 'अव्यक्त' पदवाच्या सूक्ष्मा... ऽविद्या। व्यवहारकाले स्थूलाविद्यायाः सा कारणमिति तस्या एव कारणत्वेन निर्दे... शः 'अव्यक्तं कारणम्' इत्यादौ। एतत्सृष्टौ तज्जन्मानुपलम्भान्नित्यत्वोक्तिर्निर्दो... सर्वमवदातम्॥ ७४॥

---

(१) अत्र तृतीये पादे च त्रयोदशमात्रा दृश्यन्ते।

भासमानोऽपि सर्वकर्मभिर्निर्मुक्तो भवति अम्बुजपत्रं सलिलैरिव । तथा च पराशर्यं सूत्रं 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र० सू० ४-१–१३) इति ॥ ७५ ॥

एवं जीवन्मुक्तिमुक्त्वा मुक्तस्याशरीरपातं वर्तनप्रकारमाह 'अश्नन्नि'ति चतुर्भिः श्लोकैः—

अश्नन् यद्वा तद्वा
संवीतो येन केन चिच्छान्तः ।
यत्र क्वचन च शायी
विमुच्यते सर्वभूतात्मा ॥ ७६ ॥

सर्वभूतात्मा भगवदात्मतां गतः शान्तः संयमी यद्वा तद्वा श्रेष्ठमश्रेष्ठं वान्नमश्नन् येन केनचित् काषायेण मलिनेन वा वसनेन संवीतः संवेष्ठितः यत्र क्वचन च शय्यायां भूमौ वा प्रासादोपरि रथ्यामध्ये वा शायी विमुच्यते मुक्तिसुखमनुभवति ॥ ७६ ॥

यत्किञ्चन शुभमशुभं वा कर्म कुर्वन्नपि न लिप्यते चेत्याह—

हयमेधसहस्राण्य-
प्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यै-
र्न च पापैः स्पृश्यते विमलः ॥ ७७ ॥

परमार्थविद् यतो विमलः विगताविद्यादिमलः, अतो हयमेध

सहस्राणि कुरुते यदि अथवा ब्रह्मघातलक्षाणि, तथापि न पुण्यैः स्पृश्यते, न च पापैः ॥ ७७ ॥

किञ्च—

मदकोपहर्षमत्सर-
विषादभयपरुषवर्ज्यवाग्बुद्धिः ।
निःस्तोत्रवषट्कारो
जडवद्विचरेदगाधमतिः ॥ ७८ ॥

अगाधमतिः अगाधमतलस्पर्शमनन्तानन्दरूपं ब्रह्म, तस्मिन् मतिरात्मबुद्धिर्यस्य सः । जडवदित्युपलक्षणं, जडोन्मत्तपिशाचवद् विचरेत् । तदुक्तं बृहद्वार्तिके—

'बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ।
बुद्धतत्त्वश्च लोकानां जडोन्मत्तपिशाचवत् ॥'

इति । कथंभूतः मदकोपहर्षमत्सरविषादभयपरुषवर्जी । मदो विद्वत्त्वप्रतित्वाद्यभिमानः, कोपः शत्रुविषयो मानसोऽसहनव्यापारः, हर्षः इष्टलाभहेतुर्मानस उल्लासः, मत्सरः परवृद्ध्यसहिष्णुता, विषादोऽभिमतार्थालाभादनभिमतार्थप्राप्तेर्वा दैन्यं, भयं राजलोकवेदेभ्यो भीतिः, परुषं पारुष्यं नैष्ठुर्यं, मदश्च कोपश्च हर्षश्च मत्सरश्च विषादश्च भयं च परुषं च मदकोपहर्षमत्सरविषादभयपरुषाणि तानि वर्जयितुं शीलमस्येति तथोक्तः । अवाग्बुद्धिः प्रणवे तदर्थे ब्रह्मात्मनि च पर्यवसितवाङ्मनोवृत्तिसर्वस्वः । निः स्तोत्रवषट्कारः स्तोत्रं कस्यचित् केनचिद् गुणोत्कर्षप्रशंसनं, वषट्कारो यजनं, निर्गतौ स्तोत्रवषट्कारौ यस्मात्स तथा ॥७८॥

तद्वृत्त्युपदेशमुपसंहरति—

उत्पत्तिनाशवर्जित-
मेवं परमार्थमुपलभ्य ।
कृतकृत्यसफलजन्मा
सर्वगतस्तिष्ठति यथेष्टम् ॥ ७९ ॥

एवम् 'अव्यक्तादण्डममूदि'( १० )त्याद्युक्तक्रमेण परमार्थं प्रकृतेः परं पुरुषस्य स्वरूपम् उपलभ्य 'उपोपसर्गः सामीप्ये तत्प्रतीचिसमाप्यते' इति न्यायादात्मत्वेन साक्षात्कृत्य कृतकृत्यश्चरितार्थः अत एव सफलजन्मा सर्वगतः अन्तर्बहिष्ठो (स्थो) यथेष्टं तिष्ठति सुखं जीवतीत्यर्थः ॥ ७९ ॥

देहे पतिते तस्य स्थितिः कथं कुत्र कथं वा तद्देहः पतेदिति जिज्ञासायां विदेहमुक्तिमाह—'व्यापिनमि'ति चतुर्भिः श्लोकैः—

व्यापिनमभिन्नमित्थं
सर्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं
यो वेद स तन्मयो भवति ॥ ८० ॥

---

कृतकृत्यसफलजन्मेति । तथाच श्रुतिः—
'यद्यात्मानं विजानीयादहमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्' इति ॥ ७९ ॥

तन्मय इति । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः ॥ ८० ॥

व्यापिनं परमहान्तम् ।

'अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥'

( कठो० १-३-१५ ) इति श्रुतिः । विधूतनानात्वं विधूतं नानात्वं भिन्नत्वं येन तमद्वितीयं 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६-२-१) इति श्रुतेः। निरुपमपरमानन्दं निरुपमः परमो निरतिशयश्च य आनन्दस्तम् 'आनन्दो ब्रह्मेति व्यजानात् । एषोऽस्य परम आनन्दः। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ० ४-३-३२ ) इति श्रुतेः । सर्वात्मानं वासुदेवम् इत्थं व्याप्त्यादिमन्तम् अभिन्नं वेदितुः स्वस्माद्वेद्यतया भेदमप्राप्तं यो वेद स्वात्मत्वेन साक्षात्करोति 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवतानाम्' ( बृ० १-४-१० ) इति भेदेनेक्षणस्य श्रुत्या प्रतिषिद्धत्वाद् 'एष त आत्मामृत' इत्यभेदेनेक्षणस्यामृतत्वफलतया विहितत्वाच्च । स तन्मयः सर्वभूतात्मा वासुदेवः एव देहे स्थिते पतितेऽपि भवतीत्यर्थः ।

ननु सर्वात्मनि वासुदेवे कथं श्रुतयः प्रवर्तन्ताम् । स हि सर्वबुद्धीन्द्रियाध्यक्षत्वात् सर्वात्मोच्यते। अतश्च मनसा स्मर्तुं वाचा वक्तुं चाशक्यस्वरूपः स्यात्। न खलु प्रदीपेन प्रकाशितो घटः प्रदीपं प्रकाशयितुं प्रगल्भते। एवमात्मना प्रबोधितं मनो वचो वा नात्मानं बोधयितुं शक्नोति । श्रुतिश्च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' ( तै० २-४-१ ) इति ।

ननु मुख्यगौणभेदेन द्विविधा शब्दस्यार्थे प्रवृत्तिः। तत्र मुख्या रूढि-

वृत्तिर्योगवृत्तिश्चेति द्विविधा। तयोर्वृद्धव्यवहारानिमित्तेन सङ्केतेन यः शब्दो यमर्थमभिधत्ते तस्य तस्मिन् प्रवृत्तिर्लोके रूढिरुच्यते, यथा गवादिशब्दस्य गोत्वादौ । यस्तु पुनरवयवव्युत्पादनेन स्वार्थे शब्दो वर्तते तस्य तस्मिन् प्रवृत्तिर्योगवृत्तिः, यथा पङ्कजादिशब्दस्य तामरसादौ ।

एवमौपचारिकी वृत्तिरपि द्विविधा गौणी लाक्षणिकी चेति । तयोर्मुख्यार्थगुणयोगेनार्थान्तरे शब्दस्य वृत्तिर्गौणी । यथा क्रौर्यशौर्यादिमुख्यार्थगुणयोगेन सिंहशब्दस्यार्थान्तरे प्रवृत्तिः सिंहो देवदत्त इति । या तु पुनर्मुख्यार्थसंबन्धादर्थान्तरे शब्दस्य वृत्तिः सा लक्षणा । अनयोश्चोभयोर्वृत्त्योर्मुख्यार्थबाधः प्रयोजनान्तरं च साधारणं कारणं भवति, 'मुख्ये संभवत्यमुख्यकल्पना न न्याय्येति' 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति च न्यायात् ।

सा च लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । तत्र स्वार्थं सर्वात्मना परित्यज्यार्थान्तरं यत्र शब्दो लक्षयति यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्दस्तीरं तत्र जहल्लक्षणा । यत्र पुनः स्वार्थमपरित्यज्यैव तत्संबन्ध्यर्थान्तरं शब्दो लक्षयति यथा कुन्ताः प्रविशन्तीति कुन्तिनः पुंसः तत्राजहल्लक्षणा । यत्र पुनः स्वार्थात्किंचित्परित्यज्य किंचिद्रूपं शब्दो लक्षयति यथा सोऽयं देवदत्त इत्यत्र तदेतद्देशकालवैशिष्ट्यप्रहाणेन देवदत्तमात्रं सोऽयमिति शब्दौ लक्षयतः तत्र जहदजहल्लक्षणा ।

एवं त्रिविधासु वृत्तिषु यद्यपि मुख्या गौणी च वृत्तिर्ब्रह्मणि शब्दस्य न संभवति जातिगुणक्रियारहितत्वाद्ब्रह्मणः, तथापि कथंचिल्लाक्षणिकी वृत्तिस्तस्मिन्सम्भवत्येव या जहदजहल्लक्षणेत्युच्यते ।

कथम्, अबाध्यं वस्तु हि लोके सत्यशब्दार्थः । तच्चाकाशादौ व्यावहारिकमात्मनि पारमार्थिकम् । तेनाकाशादिविशिष्टं प्रत्यक्चैतन्यं सत्यशब्दस्य वाच्योऽर्थः । तथाच 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्ये (१)सत्यशब्दस्य वाच्याकाशादिरूपप्रहाणेन प्रत्यङ्मात्रं लक्षयति । एवं ज्ञानशब्दस्य प्रकाशनशक्तिमानर्थः । तथात्वं च घटाद्याकारायां बुद्धिवृत्तौ व्यवहारतोऽस्ति परमार्थतश्च प्रतीचि । तेन बुद्धिवृत्तिविशेषविशिष्टं प्रत्यक्चैतन्यं ज्ञानशब्दस्य मुख्योर्थः । तत्र बुद्धिवृत्त्यंशं परित्यज्य प्रत्यक्चैतन्यमात्रं ज्ञानशब्दो लक्षयति । तथा शुभकर्मोपस्थापितविषयोपभोगजन्या सर्वतः कार्तार्थ्यजननी कापि बुद्धिवृत्ति र्व्यवहारतः परमार्थतः प्रत्यगात्मा चानन्दः । तथा च तद्विशिष्टेर्थे आनन्दशब्दो मुख्यवृत्त्या वर्तते 'विज्ञानमानन्दं ब्रह्म' इत्यत्र । आनन्दशब्दस्तेन बुद्धिवृत्तिरूपं स्वार्थांशं त्यक्त्वा तद्द्रष्टृरूपं स्वार्थांशं लक्षयति । एवमनन्तशब्दस्यापरिच्छिन्नं वस्तु मुख्योर्थः । कालस्य च व्यवहारे न देशकालपरिच्छेदः कालस्य कालान्तराभावात् तदव्यासदेशाभावाच्च । ब्रह्म चापरिच्छिन्नं भवति तत्त्वतः कालदेशादेः परिच्छेदहेतोस्तद्दृश्यत्वेन तत्परिच्छेदकत्वायोगात् । अतः कालाद्यनुगतं ब्रह्मानन्तशब्दस्य मुख्योर्थः । तेन कालादिकं परित्यज्यानन्तशब्दो ब्रह्मणि लक्षणया वर्तते इति ।

न चैवंविधाया लक्षणाया लोकेऽप्रसिद्धिः 'प्रकृष्टप्रकाशश्चन्द्रः' 'पृथुबुध्नोदराकारो घट' इत्यादिवाक्येषु प्रसिद्धत्वात् । तत्र हि अस्मिन्

(१) अत्र सत्यशब्द इति पाठो रम्यः प्रतिभाति ।

ज्योतिर्मण्डले कश्चन्द्रः एषु मृद्विकारेषु को घट इति च प्रश्नोत्तरत्वात् प्रकृष्टप्रकाशशब्दाभ्यां पृथुबुध्नोदराकारशब्दाभ्यां च स्ववाच्यांशप्रकृष्टत्वप्रकाशत्वजातिप्रहाणेन पथुत्वबुध्नोदराकारत्वधर्मप्रहाणेन च प्रकृष्टप्रकाशात्मिका एका चन्द्रव्यक्तिः पृथुबुध्नोदराकारैका घटव्यक्तिश्च लक्ष्यते, अन्यथा आम्रान्पृष्टः कोविदारानाहेतिवदसङ्गतिप्रसङ्गात्' एवमिहापि 'ब्रह्मविदाप्नोति परम्' इति ब्रह्म किंलक्षणमित्यपेक्षायां प्रवृत्तत्वात् सत्यादिपदानां ब्रह्मण्येव वृत्तिः ।

सोऽयं वेदान्तगतावान्तरवाक्येषु तत्त्वंपदार्थशोधनपरेषु न्यायः । तत्त्वमस्यादिमहावाक्येषु सोऽयं देवदत्तः इति वाक्यवत् प्रवृत्तिः । तत्र हि तच्छब्दस्य तद्देशकालविशिष्टो देवदत्तो मुख्यार्थः इदंशब्दस्यैतद्देशकालविशिष्टः ।

नच तत्परिग्रहे एकत्वबोधनं शक्यं तदेतद्देशकालादीनामन्योन्यैक्याभावाद् । अत उभयत्र तदेतद्देशकालवैशिष्टयप्रहाणेन देवदत्तमात्रं लक्षणया स्वीकृत्यैवयं बोध्यते स एवायमिति । तथा तत्त्वंपदयोः सर्वज्ञत्वादिगुणविशिष्ट ईश्वरः किञ्चिज्ज्ञत्वादिगुणविशिष्टो जीवश्च वाच्योर्थः ।

न च सर्वज्ञत्वादिविशिष्टस्य किञ्चिज्ज्ञत्वादिविशिष्टे नैक्यं घटते विरोधात् । अतस्तच्छब्देन सर्वज्ञत्वादिप्रहाणेनाद्वितीयाचिन्मात्रं, त्वंशब्देन किंचिज्ज्ञत्वादिप्रहाणेनापरोक्षाचिन्मात्रं च लक्षयित्वैक्यं बोध्यते तत्त्वमसीति । तस्माद् ब्रह्मणि वेदान्तानां प्रवृत्तौ नानुपपन्नं किञ्चिदिति चेद् न

लोकेप्रमाणावन्तरावगतस्य तीरादिशब्दान्तरवाच्यस्य चार्थस्य लक्ष्यत्वदर्शनात् ब्रह्मणस्तथात्वानभ्युपगमाच्च लक्ष्यत्वासिद्धेः इति यत् कैश्चिदुच्यते,

तदसारं सिद्धत्वमात्रं लक्षणाप्रयोजकं न प्रमाणसिद्धत्वं केवलव्यतिरेकाभावात् । न खलुसिद्धत्वे सत्यपि प्रमाणसिद्धत्वाभावापराधेन क्वचिल्लक्षणाभावो दृष्टः । ब्रह्मचिदेकरसत्वात्स्वतः सिद्धमिति किमिह प्रमाणतः सिद्ध्यभावेन हीयते ।

न च शब्दान्तरवाच्यस्वाभावे लक्ष्यनिर्देशासिद्धिः अवाच्यस्याप्यर्थस्य लक्ष्यत्वदर्शनात् । 'इक्षुर्मधुरो' 'गुडो मधुरः' 'क्षीरं, मधुरम्' इत्यादौ हीक्ष्वादिपदैर्मधुररसविशेषो लक्ष्यते न च तस्य शब्दान्तरवाच्यत्वमस्तीति, यथाहुर्भट्टपादाः—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥

इति । तथापि सत्यादिपदैः किंलक्ष्यमिति मया पृष्टे किमायुष्मतोच्यते, यः प्रष्टा भवान्, यश्च प्रतिवक्ताहं, य चान्ये देहिनः, तेषां सर्वेषां यद् देहाद्यनवच्छिन्नं रूपं तदेवेति । एतच्च रूपमिक्षुक्षीरादिरसविशेषवत् स्वानुभवगम्यमेव, नेदमित्थमिति वक्तुं केनापि शक्यते इति न तदनुदीरणे दोषः कश्चित् नापि स्वसिद्धत्वात् प्रष्टव्यमेतादित्यलं बहुप्रलापेन८०

कुत्र कथं विद्वद्देहः पततीत्यस्योत्तरमाह—

तीर्थे श्वपचगृहे वा
नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः
कैवल्यं याति हतशोकः ॥ ८१ ॥

हतशोक एवं जीवन्नेव मुक्तः पुमान् यतो ज्ञानसमकालमुक्तः ज्ञानोदयकाल एव पिण्डमण्डे अण्डं तत्कारणभूतायां भुवि तां तत्कारणेप्वप्सु अपोऽप्यासां कारणे ज्योतिषि तत् तत्कारणे वायौ वायुं व्योम्नि तत् तामसाहन्तत्त्वे एकादशेन्द्रियाणि तदधिष्ठातृदेवताश्च राजसे सात्त्विके चाहन्तत्वे त्रिविधमहन्तत्वम् महत्तत्त्वे महत्तत्त्वं चाव्यक्ते तत्पुंसि तदधिष्ठातरि पुरुषं च स्वे महिम्नि परमपुरुष इत्येवं सृष्टिविलोमक्रमेण स्वे धामनि संहृतदेहदैहिकप्रपञ्चोऽतो गङ्गादौ तीर्थे श्वपचगृहे कस्यचिन्नीचस्य गृहे वा नष्टस्मृतिः प्रबुद्धो वा देहं परित्यजन्नपि कैवल्यं याति । यथाहुः—

"यत्र यत्र मृतो ज्ञानी येन वा केन मृत्युना ।
यथा सर्वगतं ब्रह्म तत्र तत्र लयं गतः" ॥

इति ॥ ८१ ॥

ननु 'सितासिते सरितौ यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति' इति श्रुतिप्रसिद्धेः 'तीर्थे श्वपचगृहे वेति' (कथं) साम्यवचनमित्यत्राह—

पुण्याय तीर्थसेवा
निरयाय श्वपचसदननिधनगतिः ।

---

ज्ञानसमकालमुक्त इति । देहदैहिकादिप्रपञ्चं स्वस्वकारणे प्रविलाप्य स्वे-महिम्नि परमपुरुषे लीनः यत्र क्वापि देहं त्यजन्नपि कैवल्यं यातीत्यर्थः । तथा च ब्रह्माण्डपुराणम्—

स्थूलं विलाप्य करणे करणं निदाने
तत्कारणं करणकारणवर्जिते च ।
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र
तं त्वां हरिं विमलबोधघनं नमामः ॥ इति ॥ ८१ ॥

पुण्यापुण्यकलङ्क
स्पर्शाभावे तु किं तेन ॥ ८२ ॥

तीर्थसेवा तत्र स्नानपानादिकं तत्रैव मृतिश्च पुण्याय भवति न साक्षान्मोक्षाय 'तमेव विदित्वातिमृत्युमेति' 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेरात्माज्ञानमूलस्य बन्धस्य तज्ज्ञानेन विना निवृत्त्यनुपपत्तेः अन्यथा कर्मसाध्यत्वेन मोक्षस्यानित्यतापत्तेश्च। श्वपचसदननिधनगतिः नीचसदने विनाशप्राप्तिः निरयाय नरकपातफलस्य पापस्योदयाय। सत्यमेवमेतत्। किमतो भवतीत्यत्राह—पुण्यापुण्यकलङ्कस्पर्शाभावे तु अपुण्यं पापं पुण्यं चापुण्यं च पुण्यापुण्ये स एव कलङ्कः पुण्यापुण्यकलङ्कः तेन स्पर्शाभावे तु तेन तदुभयहेतुना किं न किञ्चिदपि फलमस्तीत्यर्थः ॥ ८२ ॥

एवमपि देहपातसमये नष्टस्मृतेस्तत्त्वविदोऽपि न मुक्तिः—

'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः' ॥

इति भगवद्वचनात्, प्रत्युताधोगतिरेव स्यात् ।

'उर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधोगच्छन्ति तामसाः' (गी० १४-१८)

'अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते प्रवृद्धे कुरुनन्दन ॥ (गी०१४-१३)

इति च भगवद्वचनादिति चेत्तत्राह—

वृक्षाग्राच्च्युतपादो
यद्वदनिच्छन्नरः क्षितौ पतति ।
तद्वद् गुणपुरुषज्ञोऽ-
निच्छन्नपि केवलीभवति ॥ ८३ ॥

वृक्षाग्राद् वृक्षारूढः कश्चित् तदग्राद् दैवात् च्युतपादोऽनिच्छन्नपि क्षितौ पतति यद्वत्, तद्वद् गुणपुरुषज्ञः प्रकृतिपुरुषतत्त्वज्ञः उभयोः स्वरूपविवेकेन देहादिरूपिण्याः प्रकृतेः पुरुषमात्मानं पृथक्कृत्य प्रागेव विसृष्टदेहोऽनिच्छन् देहपातक्षणे ब्रह्मभूयं गमिष्यामीति संकल्पमकुर्वन्नपि केवलीभवति ब्रह्मण्येव लीयत इत्यर्थः । ओमित्येकाक्षरमित्यादिभगवद्वाक्यानि मुमुक्षुविषयाणि 'स मद्भावं याति' इत्यादिवाक्यशेषान्न मुमूर्षुविषयाणीत्याशयः ॥ ८३ ॥

एवं निष्कामस्य ब्रह्मोपासनस्य फलं सद्योमुक्तिरुक्ता अथ सकामस्यापि तदुपासनस्य क्रमेण मुक्तिफलत्वमवश्यानुष्ठेयत्वसाधनार्थमाह 'परमार्थेति' त्रिभिः श्लोकैः—

परमार्थमार्गसाधन-
मारभ्याप्राप्य योगमपि नाम ।
सुरलोकभोगभोगी
मुदितमना मोदते सुचिरम् ॥ ८४ ॥

परमार्थो ब्रह्म तस्य सम्बन्धी मार्गस्तत्प्राप्त्युपाय उपासनं परमार्थमार्गः तस्य साधनमनुष्ठानम् आरभ्यापि योगं तदैक्यसाक्षाद्बोधम् अप्राप्य मृतः सुरलोकभोगभोगी सुरादीनामिन्द्रादीनां लोकेषु ये भोगाः विशिष्टकामास्तेषां भोगी अनुभवी स मुदितमनाः सुचिरं मोदते नाम सदा प्रसिद्धमित्यर्थः ॥ ८४ ॥

किं तत्तल्लोकाधिपतय एनं प्रति कुर्वन्तीत्याह—

विषयेषु सार्वभौमः
सर्वजनैः पूज्यते यथा राजा ।
भवनेषु सर्वदेवै-
र्योगभ्रष्टस्तथा पूज्यः ॥ ८५ ॥

यथा सार्वभौमो राजा विषयेषु तेषु तेषु देशेषु सर्वजनैः पूज्यते तथा योगभ्रष्टो भुवनेषु सर्वदेवैः पूज्यः ॥ ८५ ॥

उपासनजन्ये महितैर्भोगैः पुण्ये क्षीणे सति किमसौ करोतीत्यत्राह—

महता कालेन महान्
मानुष्यं प्राप्य योगमभ्यस्य ।
प्राप्नोति दिव्यममृतं
यत्तत्परमं पदं विष्णोः ॥ ८६ ॥

महता द्विपरार्द्धपर्यन्तेन कालेन ब्रह्मलोकपर्यन्तं गत्वा पुनश्च

मानुष्यं प्राप्य महान् विशिष्टो ब्राह्मणो भूत्वा योगं ब्रह्मोपासनं प्राचीनसंस्कारवशाद् अभ्यस्य यद् दिव्यं दिवि भवं सूर्यमण्डलमध्यस्थं स्वप्रकाशचिद्रूपं वा 'येन सूर्यस्तपति तेजसेद्ध' (तै०ब्रा०) इति श्रुतेः,

'यदादित्य गतं तेजो जगद्भासयतेऽखिलम् ।
यश्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (गी०१५–१२)

इति भगवद्वचनाच्च । अमृतम् अनश्वरम् नित्योदितानस्तामितरूपम् अथवाऽमृतवदास्वाद्यमस्तं सदानन्दघनं परमं सर्वोत्कृष्टं प्रकृतेः सकार्यप्रवाहाया अधिष्ठानभूतं निषेधावधिभूतं च विष्णोः सर्वात्मनः सर्वेश्वरस्य च परमपुरुषस्य पद्यते गम्यते ज्ञायते च मुमुक्षुभिरिति पदं स्वरूपम्, तत् प्राप्नोति स्वात्मतया साक्षात्करोति, मुच्यते इत्यर्थः । तथा च श्रीमद्भगवद्गीतायाम्—

"अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥
एतं मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥"

(गी० ६–३७, ३८, ३९,) इत्यर्जुनेन पृष्टे भगवताभिहितम्—

"पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति ॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥
(गी० ६–४१, ४२, ४३, ४४, ४५) इति ॥ ८६ ॥

अथ मुख्यप्रमाणमूलत्वान्नित्यमुक्तेन भगवताऽनन्तेन रचितत्वान्महिततमविषयत्वात् कैवल्यफलत्वान्मनोज्ञवृत्तत्वात् परिमितग्रन्थत्वाच्चेदंशास्त्रं तत्त्वजिज्ञासुभिरभ्यसनीयमिति प्रतिपादयन् ग्रन्थ (नाम) चापदिशन्नुपसंहरति—

वेदान्तशास्त्रमखिलं
विलोक्य शेषस्तु जगदाधारः ।

एतस्य ग्रन्थस्य समूलतां सूचयितुं ग्रन्थकर्तुर्ग्रन्थस्य च नामोपदिशन्नुपसंहरति—वेदान्तेति । जगदाधारः शेषः पतञ्जलिरिदं परमार्थसारं बबन्धेत्यन्वयः ।
श्रीमन्माधवदेशिकादपि परां विद्यां तु वैयासिकीं
मीमांसामतिमांसलां गुरुवराद्रामानुजार्यादपि ।

आर्यापञ्चाशीत्या

बबन्ध परमार्थसारमिदम् ॥ ८७ ॥

॥ इति परमार्थसारं समाप्तम् ॥

दुरवधारणे जगदाधारो जगतामाधारभूतः शेषः अनन्तस्तु न यः कोऽपि विपश्चित् सोऽपि वेदान्तशास्त्रं वेदान्त एव यच्छास्त्रं प्रत्यक्षानुमानाद्यनधिगम्याभिमतार्थप्रकाशनपरं वाक्यकदम्बकं तद् अखिलं सर्वशाखागतं विलोक्य "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषाद्" ( ब्र० सू० ३—३--१ ) इति सूत्रोक्तरीत्या सर्वेषां वेदान्तानां ब्रह्मात्मप्रतिपादकत्वं निश्चित्य तान्सम्यग् विचार्य आर्यापञ्चाशीत्या—

"लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं न लघू वा प्रथमेऽर्द्धे नियतमार्यायाः ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयति पदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः' ॥

---

शाब्दं चन्द्रधराज्जगत्सु विदिताच्छ्रीदत्तविद्वद्वरा-
त्तर्कं सम्यगधीत्य सोऽस्मि सुकृती श्रीसूर्यनारायणः ॥

इति श्री न्यायव्याकरणाचार्य सूर्यनारायण शुक्लविरचितं
विषमस्थलपरमार्थसारटिप्पणं समाप्तम् ॥

इत्युक्तलक्षणो मात्रावृत्तविशेष आर्यावृत्तश्लोकानां पञ्चाशीत्या अशीतिश्च पञ्च च पञ्चाशीतिः। (१)ततश्चतसृभिर्विदेहमुक्तिरुक्ता, ततस्तिसृभिः क्रममुक्तिः एवं चतुरशीतिः इयं चान्तिमार्येति पञ्चाशीतिरार्या भवन्तीति। तया परमार्थसारमिदं बबन्ध ॥ ८७ ॥

परमार्थसारविवरणमेतद्गोविन्दचन्द्रचन्द्रिकया।
संहृतसंसृतितापात् संभूतं राघवानन्दात् ॥
यश्चानन्तसुखैकतानविमलस्वात्मप्रबोधः स्वराट्
योऽसौ भातिचराचरात्मकजगद्रूपेण भूत्या स्वया।
यत्स्वाराज्यममेयमागमगिरः संलक्षयन्त्यक्षया-
स्तस्मै विश्वहृदि स्थिताय महते पुंसे नमस्कुर्महे ॥

इति श्रीराघवानन्दविरचितं परमार्थसारविवरणं समाप्तम्।

---

(१) तत इति। अतः प्राक् 'तत्र प्रथमयार्यया ग्रन्थोवतारितः, ततश्चतसृभिः प्रश्नप्रकार उक्तः, तत एकोनचत्वारिंशता तदुत्तरं, ततो दशभिर्जीवपरैक्यबन्धाऽविषयकत्वादि कथितम्, ततो विद्योदयोपाय—विद्यास्वरूप—तत्फलजीवन्मुक्तीनां स्वरूपम् एकोनविंशत्या प्रतिपादितम्, अथ चतसृभिर्मुक्तस्याशरीरपातं वर्तनप्रकारोऽभिहितः' इत्यर्थको ग्रन्थस्त्रुटित इव भाति।

# परमार्थसारश्लोकानुक्रमणिका

इति श्लोकानुक्रमणिका ।

# अच्युतग्रन्थमालातः प्रकाशितां पुस्तकानां सूचीपत्रम् ।

## [ क ] विभागे

१. भगवन्नामकौमुदी—श्रीलक्ष्मीधरविरचिता, श्रीमदनन्तदेवनिर्मितप्रकाशटीकासहिता, आचार्यवरगोस्वामिदामोदरलालशास्त्रिभिः सम्पादिता । मू० आ० १०

२. भक्तिरसायनम्—श्रीमधुसूदनसरस्वतीविरचितम् । प्रथमोल्लासे मूलकृद्रचितया टीकया, शेषद्वयोल्लासे आचार्यवरगोस्वामिदामोदरलालशास्त्रिविरचितया प्रेमप्रपया टीकया सहितम् । मू० आ० १२

३. शुल्वसूत्रम्—श्रीमहर्षिकात्यायनप्रणीतम् वेदाचार्य्यश्रीविद्याधरशर्म्मविरचितया सरलया वृत्त्या सहितम् । तैरेव सम्पादितम् । मू०आ० ४

४. कात्यायनश्रौतसूत्रम्—श्रीमहर्षिकात्यायनप्रणीतम् । वेदाचार्यश्रीविद्याधरशर्म्मविरचितया सरलया वृत्त्या समेतम् । तैरेव सम्पादितम् । मू० रु० ६

५. प्रत्यक्तत्त्वचिन्तामणिः—( प्रथमो भागः ) श्रीसदानन्दविद्वद्विरचितः ग्रन्थकृद्रचितया स्वोपज्ञस्वप्रभाख्यटीकया सहितः, साहित्याचार्य-श्रीकृष्णपन्तशास्त्रिणा संपादितः । मू० रु० २

६. हरिभक्तिरसामृतसिन्धुः—श्रीरूपगोस्वामिविरचितः । श्रीजीवगोस्वामिकृतदुर्गमसङ्गमनीटीकोपेतः, आचार्यवरगोस्वामिश्रीदामोदरलालसाखिभिः संपादितः । मू० रु० ३

७. प्रत्यक्तत्त्वचिन्तामणिः—( द्वितीयो भागः ) सदानन्दविद्वद्विरचितः ग्रन्थकृद्रचितया स्वोपज्ञस्वप्रभाख्यव्याख्ययासहितः साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा सम्पादितः । मू० रु० २-४

८. तिथ्यर्कः—श्रीदिवाकरविरचितः, साहित्याचार्यश्रीकृष्णपन्तशास्त्रिणा संपादितः । मू० १-८

९. परमार्थसारम्—श्रीभगवदादिशेषविरचितम् । न्यायव्याकरणाचार्यश्रीसूर्यनारायणशुक्लविरचितटिप्पणीसमेतम् । मू० आ० ६

## [ ख ] विभागे

१. खण्डनखण्डखाद्यम्—श्रीहर्षप्रणीतम् । पण्डितप्रवरश्रीचण्डीप्रसादशुक्ल-विरचितहिन्दीटीकया सहितम् । मू० रु० २-१२

२. काशीकेदारमाहात्म्यम्—साहित्यरञ्जनश्रीविजयानन्दत्रिपाठिविरचित-हिन्दीटीकयासहितम्, साहित्याचार्यश्रीकृष्णपन्त-शास्त्रिणा संपादितम् । मू० रु० २-८

प्राप्तिस्थानम्—

[१] अच्युतग्रन्थमालाकार्यालयः,
काशी ।

[२] गीता प्रेस गोरखपुर ।

[३] चौखम्बासंस्कृतग्रन्थमालाकार्यालयः,
काशी ।

